॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
२३७



वररुचिप्रणीतः

# वाररुचसङ्ग्रहः

## श्रीनारायणकृतया दीपप्रभाव्याख्यया समुपेतः

सम्पादकः
**डॉ० अमरनाथपाण्डेयः**
आचार्योऽध्यक्षश्च, संस्कृतविभागः
काशी विद्यापीठम्, वाराणसी




**चौखम्भा संस्कृत संस्थान**
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

२३७

वररुचिप्रणीतः

# वाररुचसङ्ग्रहः

श्रीनारायणकृतया दीपप्रभाव्याख्यया समुपेतः

सम्पादकः

डॉ० अमरनाथपाण्डेयः

आचार्योऽध्यक्षश्च, संस्कृतविभागः

काशी विद्यापीठम्, वाराणसी



चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० ११३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी

मुद्रक : विद्याविलास प्रेस, वाराणसी

संस्करण : प्रथम, वि० सं० [illegible]'३

मूल्य





फोन : ६५८८९

अन्य प्राप्तिस्थान

**चौखम्भा विश्वभारती**

पोस्ट बाक्स नं० १०८४
चौक, ( चित्रा सिनेमा के सामने )
वाराणसी-२२१००१ ( भारत )
फोन : ६५४४४

THE
KASHI SANSKRIT SERIES
237
*****

# VĀRARUCHASAṄGRAHA

OF

VARARUCHI

*with the commentary 'Dīpaprabhā'*

of

NĀRĀYAṆA

Edited with Introduction and annotations
By
Dr. A. N. PANDEY
*Professor and Head, Department of Sanskrit*
*Kashi Vidyapith, Varanasi*

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publishers and Distributors of Oriental Cultural Literature*
P. O. Chaukhambha, Post Box No. 1139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI ( INDIA )

# भूमिका

वाररुचसङ्ग्रहस्य कर्त्ता वररुचिरस्ति। वार्तिककारो वररुचिः कात्यायननाम्ना प्रसिद्धो व्याकरणस्य मुनित्रये गण्यते। एको वररुचिर्विक्रमादित्यस्य सभ्य आसीदिति ज्योतिर्विदाभरणस्य (२२।१०) श्लोकाज् ज्ञायते--

धन्वन्तरिक्षपणकामरसिंहशङ्कूवेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नवविक्रमस्य ॥

लिङ्गविशेषविधिः, पत्रकौमुदी, विद्यासुन्दरकाव्यम् इत्येते ग्रन्था विक्रमादित्यसभ्येन वररुचिना कृता इति तेभ्यो ग्रन्थेभ्योऽवगम्यते--

१. "इति श्रीमदखिलवाग्विलासमण्डितसरस्वतीकण्ठाभरण-अनेकविशरण - श्रीनरपतिविक्रमादित्यकिरीटकोटिनिघृष्टचरणारविन्द-आचार्यवररुचिविरचितो लिङ्गविशेषविधिः समाप्तः।"—लिङ्गविशेषविधेः पुष्पिकायाम्।

२. विक्रमादित्यभूपस्य कीर्तिसिद्धेर्निदेशतः ।
श्रीमान् वररुचिर्धीमांस्तनोति पत्रकौमुदीम् ॥

--पत्रकौमुद्याः प्रारम्भे।

३. "इति समस्तमहीमण्डलाधिपमहाराजविक्रमादित्यनिदेशलब्ध-श्रीमन्महापण्डितवररुचिविरचितं विद्यासुन्दरप्रसङ्गकाव्यं समाप्तम्।"

--विद्यासुन्दरकाव्यपुष्पिका।

मिथिलायां पद्मनाभमिश्रनामा कश्चिद् वैयाकरणोऽभूत्। तस्य व्याकरणादर्शनामधेये ग्रन्थे तेन स्वपरिचयो दत्तः--

चञ्चलाप्यचला लक्ष्मीर्वाणी यस्य गृहे गृहे।
विषुवन्तमहं वन्दे विक्रमो यत्र भूपतिः ।।

कालिदासादयोऽप्यन्ये संख्यावन्तः सहस्रशः ।
तेषामेको वररुचिः सर्वशास्त्रविशारदः ।।

तत्सुतो न्यासदत्तश्च फणिभाष्यार्थतत्त्ववित् ।
जयादित्यस्तत्सुतो मीमांसाशास्त्रपारगः ।।

श्रीपतिस्तत्सुतश्चैव साङ्ख्यशास्त्रविशारदः ।

× × ×

भानुदत्तश्चतत्सुतो रसमञ्जरीकारकः ।
हलायुधस्तत्सुतश्च वेदशास्त्रार्थतत्त्ववित् ।।

दामोदरस्तत्सुतश्च काव्यालङ्कारकारकः ।
तत्सुतः पद्मनाभोऽहं मयैवैतन्निरूप्यते ।।

श्लोकैरेभिर्वररुचिः पद्मनाभमिश्रस्य पूर्वपुरुष इति ज्ञायते । वररुचेर्वंशपरम्परैवं वर्त्तते—( १ ) न्यासदत्तः (फणिभाष्यार्थतत्त्ववित्) ( २ ) जयादित्यः ( मीमांसकः ), ( ३ ) श्रीपतिः ( साङ्ख्यशास्त्रविशारदः ), ( ४ ) गुणेश्वरः ( काव्यतत्त्ववेत्ता ), ( ५ ) भानुमिश्रः ( प्रसिद्धकविः ), ( ६ ) हलायुधः ( वेदशास्त्रार्थतत्त्ववित् ), ( ७ ) श्रीदत्तः ( धर्मशास्त्री ), ( ८ ) भवदत्तः ( वेदान्ती ), ( ९ ) दामोदरः ( काव्यालङ्कारकारकः ), ( १० ) पद्मनाभः ( व्याकरणादर्शकारः ) ।

मैथिलस्य पद्मनाभमिश्रस्य वंशजः सुरेश्वरमिश्रः सोदरपुरग्रामे वसतिं चकार। अयमेव सोदरपुरीयमैथिलवंशस्य संस्थापकोऽभूत् । पञ्जीप्रबन्धेऽस्योल्लेखो विद्यते । अतः पद्मनाभस्य पूर्वपुरुषो वररुचिर्विक्रमादित्यस्य सभ्य आसीदिति स्थितम् ।

वररुचेरनेके ग्रन्थाः प्रसिद्धाः सन्ति-लिङ्गविशेषविधिः, पत्रकौमुदी, विद्यासुन्दरकाव्यम्, उभयाभिसारिकाभाणः, निरुक्तसमुच्चयः, सारसमुच्चयः, लिङ्गवृत्तिविचारः, वाररुचम् (अभिधानम्), अशौचाष्टकम्, वाररुचम् (ज्योतिषम्) च। वररुचेरुपसर्ग-सूत्राण्यप्युपलभ्यन्ते। एते ग्रन्थाः सङ्ग्रहकारेण वररुचिना प्रणीता इति सम्भाव्यते। अयं वररुचिर्बहुशास्त्राभिज्ञ आसीत्। अनेन विविधशास्त्रसम्बद्धाः सङ्ग्रहा निर्मिताः। दीपप्रभाकारो नारायणो वररुचिविषये 'न कात्स्न्र्येन भासन्ते तादृशां गिरः' इति सङ्ग्रहकारस्य गौरवं प्रकटयति। पुनश्च 'सूत्रकारकल्पः सङ्ग्रहकारस्तद्वच्छान्दसं प्रयोगं कृतवान्' इति वचनेन सङ्ग्रहकारस्य वररुचेर्वार्त्तिककारस्य कात्यायनस्य चाभिन्नत्वं स्वीक्रियते। परन्त्वयं वररुचिर्वार्तिककारात् कात्यायनाद् भिन्न इति वाररुचसङ्ग्रहस्य वचनादवगम्यते। ग्रन्थेऽस्मिन् कुत्रापि वार्तिककारस्य विवेचनपाटवं नोपलभ्यते। केवलं व्याकरणस्य नियमाः स्पष्टं सन्दृब्धाः सन्ति। वार्तिककारस्य नेयं पद्धतिरस्ति। अतोऽयं वररुचिः कात्यायनाद् भिन्न एव।

मैथिलस्य पद्मनाभस्य पूर्वपुरुषो वररुचिः सङ्ग्रहकारो वररुचिरेवेति प्रमाणाभावान्निश्चेतुं न शक्यते।

दीपप्रभायां भर्तृहरिकैयटजिनेन्द्रहरदत्तवचनान्युद्धृतानि सन्ति। एतेनायं प्राचीनो वैयाकरण इति वक्तुं शक्यम्।

दीपप्रभायाः पुष्पिकायामधोलिखितः श्लोको वर्तते—

वेदो नाम महत्पदं जनपदो यत्र द्विजानां ततिः
साङ्गं वेदमधीत्य वाच्यमखिलं मीमांसतेऽस्य स्फुटम्।
तत्र ग्रामवरे क्वचिन्निवसता नाम्ना च नारायणे-
नैषा वाररुचार्थदीपनपरा दीपप्रभा निर्मिता॥

वेदनामधेये जनपदे कस्मिंश्चिद् ग्रामे नारायण उवासेति गम्यते।

चञ्चलाप्यचला लक्ष्मीर्वाणी यस्य गृहे गृहे।
विषुवन्तमहं वन्दे विक्रमो यत्र भूपतिः ॥

कालिदासादयोऽप्यन्ये संख्यावन्तः सहस्रशः ।
तेषामेको वररुचिः सर्वशास्त्रविशारदः ॥

तत्सुतो न्यासदत्तश्च फणिभाष्यार्थतत्त्ववित् ।
जयादित्यस्तत्सुतो मीमांसाशास्त्रपारगः ॥

श्रीपतिस्तत्सुतश्चैव साङ्ख्यशास्त्रविशारदः ।

× × ×

भानुदत्तश्चतत्सुतो रसमञ्जरीकारकः ।
हलायुधस्तत्सुतश्च वेदशास्त्रार्थतत्त्ववित् ॥

दामोदरस्तत्सुतश्च काव्यालङ्कारकारकः ।
तत्सुतः पद्मनाभोऽहं मयैवैतन्निरूप्यते ॥

श्लोकैरेभिर्वररुचिः पद्मनाभमिश्रस्य पूर्वपुरुष इति ज्ञायते । वररुचेर्वंशपरम्परैवं वर्त्तते—( १ ) न्यासदत्तः (फणिभाष्यार्थतत्त्ववित्) ( २ ) जयादित्यः ( मीमांसकः ), ( ३ ) श्रीपतिः ( साङ्ख्यशास्त्रविशारदः ), ( ४ ) गुणेश्वरः ( काव्यतत्त्ववेत्ता ), ( ५ ) भानुमिश्रः ( प्रसिद्धकविः ), ( ६ ) हलायुधः ( वेदशास्त्रार्थतत्त्ववित् ), ( ७ ) श्रीदत्तः ( धर्मशास्त्री ), ( ८ ) भवदत्तः ( वेदान्ती ), ( ९ ) दामोदरः ( काव्यालङ्कारकारकः ), ( १० ) पद्मनाभः ( व्याकरणादर्शकारः ) ।

मैथिलस्य पद्मनाभमिश्रस्य वंशजः सुरेश्वरमिश्रः सोदरपुरग्रामे वसतिं चकार । अयमेव सोदरपुरीयमैथिलवंशस्य संस्थापकोऽभूत् । पञ्जीप्रबन्धेऽस्योल्लेखो विद्यते । अतः पद्मनाभस्य पूर्वपुरुषो वररुचिर्विक्रमादित्यस्य सभ्य आसीदिति स्थितम् ।

वररुचेरनेके ग्रन्थाः प्रसिद्धाः सन्ति-लिङ्गविशेषविधिः, पत्रकौमुदी, विद्यासुन्दरकाव्यम् , उभयाभिसारिकाभाणः, निरुक्तसमुच्चयः, सारसमुच्चयः, लिङ्गवृत्तिविचारः, वाररुचम् (अभिधानम्), अशौचाष्टकम् , वाररुचम् (ज्योतिषम्) च । वररुचेरुपसर्ग-सूत्राण्यप्युपलभ्यन्ते । एते ग्रन्थाः सङ्ग्रहकारेण वररुचिना प्रणीता इति सम्भाव्यते । अयं वररुचिर्बहुशास्त्राभिज्ञ आसीत् । अनेन विविधशास्त्रसम्बद्धाः सङ्ग्रहा निर्मिताः । दीपप्रभाकारो नारायणो वररुचिविषये 'न कात्स्न्र्येन भासन्ते तादृशां गिरः' इति सङ्ग्रहकारस्य गौरवं प्रकटयति । पुनश्च 'सूत्रकारकल्पः सङ्ग्रहकारस्तद्वच्छान्दसं प्रयोगं कृतवान्' इति वचनेन सङ्ग्रहकारस्य वररुचेर्वार्त्तिककारस्य कात्यायनस्य चाभिन्नत्वं स्वीक्रियते । परन्त्वयं वररुचिर्वार्तिककारात् कात्यायनाद् भिन्न इति वाररुचसङ्ग्रहस्य वचनादवगम्यते । ग्रन्थेऽस्मिन् कुत्रापि वार्तिककारस्य विवेचनपाटवं नोपलभ्यते । केवलं व्याकरणस्य नियमाः स्पष्टं सन्दृब्धाः सन्ति । वार्तिककारस्य नेयं पद्धतिरस्ति । अतोऽयं वररुचिः कात्यायनाद् भिन्न एव ।

मैथिलस्य पद्मनाभस्य पूर्वपुरुषो वररुचिः सङ्ग्रहकारो वररुचिरेवेति प्रमाणाभावान्निश्चेतुं न शक्यते ।

दीपप्रभायां भर्तृहरिकैयटजिनेन्द्रहरदत्तवचनान्युद्धृतानि सन्ति । एतेनायं प्राचीनो वैयाकरण इति वक्तुं शक्यम् ।

दीपप्रभायाः पुष्पिकायामधोलिखितः श्लोको वर्तते––

वेदो नाम महत्पदं जनपदो यत्र द्विजानां ततिः
साङ्गं वेदमधीत्य वाच्यमखिलं मीमांसतेऽस्य स्फुटम् ।
तत्र ग्रामवरे क्वचिन्निवसता नाम्ना च नारायणे-
नैषा वाररुचार्थदीपनपरा दीपप्रभा निर्मिता ।।

वेदनामधेये जनपदे कस्मिंश्चिद् ग्रामे नारायण उवासेति गम्यते ।

केरलप्रदेशे भूभागविशेषस्य 'वेदनाडु' इति व्यपदेशोऽस्तीति केरलीया ब्राह्मणा वदन्ति । तस्मात् स एव वेदजनपदः स्वीकर्तुं शक्यः ।

विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेन वेदपदस्थेन बोपदेवद्विजेन यः ।।

इति श्लोकः कविकल्पद्रुमस्य पुष्पिकायां पठितोऽस्ति । यदि नारायणबोपदेवयोरभिन्नौ वेदजनपदौ तदोत्तरदेशेष्वेव वेदजनपद आसीदिति प्रत्येतव्यम्, यतो बोपदेव उत्तरदेशीय आसीत् । यदि बोपदेवस्य जनपदाद् नारायणस्य वेदजनपदो भिन्नस्तदा केरलप्रदेश एव नारायणस्य वेदजनपद आसीदिति निश्चेतुं शक्यते ।

तन्त्रसमुच्चयाख्यस्य ग्रन्थस्यादिकर्ता कश्चन नारायणः । सोऽपि वेदजनपदवासी । अतोऽयं दीपप्रभाकारो नारायणस्तन्त्रसमुच्चयकारो नारायण इत्यनुमातुं शक्यम् । 'कल्यब्देष्वतियत्सु नन्दनयनेष्वम्भोधिसङ्ख्येषु' ( ४५२९ ) इति तन्त्रसमुच्चयस्योल्लेखाद् नारायणस्य कालः क्रैस्तपञ्चदशशाताब्दी अवगम्यते ।

१८-६-१९८६ **अमरनाथपाण्डेयः**

॥ श्रीः ॥

# वाररुचसङ्ग्रहः

## दीपप्रभाव्याख्योपेतः



यस्य प्रसादजलबिन्दुनिपातलब्ध-
शाखोपशाखकुसुमाः फलिताश्च भान्ति ।
प्रारम्भरूपतरवोऽखिलदेहभाजां
स्तान्मे स वाररुचसङ्ग्रहविग्रहाय ॥

तत्र तावच्चिकीर्षितग्रन्थस्य मङ्गलाचारेत्यादिस्मृतिसिद्धाविघ्नपरिसमाप्त्यादिप्रयोजनसिद्ध्यर्थं शिष्टाचारानुसरणार्थं च प्रबन्धारम्भेऽवश्यकर्त्तव्यं मङ्गलाचरणं ग्रन्थगौरवभयात् तस्मिन्ननिवेशितं विधाय सुप्तिङ्कृतां कारके विधानात् समासतद्धितयोः कारकहेतुकसुबन्तनिमित्तत्वाच्च सकलनिदानभूतकारकावधारणस्य प्रथमप्राप्ततां दर्शयति—

**प्रयोगमिच्छता ज्ञातुं ज्ञेयं कारकमादितः ।**

इति । प्रयुज्यत इति प्रयोगः । 'अकर्तरि च कारके संज्ञायाम्'

( ३. ३. १९ ) इत्यत्र संज्ञाग्रहणस्य प्रत्याख्याततत्वात्[1] कर्मणि घञ्। लोकेनाभिप्रयुक्ताः साक्षाद्वाचका ये शब्दाः साधवो गवादयः, तेषां स्वरूपं गवाद्युच्चारणेच्छुभिः बालादिभिरशक्त्यादिनान्यथोच्चारितेभ्यः साधुशब्दस्मारणद्वारेणार्थप्रत्यायनसमर्थेभ्यो गाव्याद्यपशब्देभ्यो[2] विवेकेन परिज्ञातुमिच्छता तदुपायजिज्ञासुना प्रथमं कारकस्वरूपमवधार्यमित्यर्थः। तत्र प्रयोगं ज्ञातुमिच्छतेत्यनेन 'व्याकरणस्य यत् प्रयोजनं साधुशब्दपरिज्ञानं नाम, तदेवास्य प्रकरणस्यापि। विषयश्च स एव, ये साधुशब्दाः। अधिकारी च स एव, यः साधुशब्दत्वं जिज्ञासुः' इत्युक्तं भवति।

कर्मादिभेदप्रदर्शनपूर्वकं तत्स्वरूपमाह—

**संज्ञया षड्विधं**

इत्यादिना। तत् कारकं संज्ञया कर्तृकर्मकरणसम्प्रदानापादानाधिकरणरूपया षट्प्रकारयुक्तं भवतीत्यर्थः। ननु हेतोरपि स्वव्यापारे प्रेषणादौ कर्तृत्वात् 'कारके' ( १. ४. २३ ) इति तत्राधिकाराच्च कारकत्वात् सप्तविधं वाच्यम्। नैतदस्ति। 'तत्प्रयोजको हेतुश्च'

---

महेश्वरं हृदि ध्यात्वा शङ्करं ज्ञानदं विभुम्।
सङ्ग्रहे टिप्पणं किञ्चित् सतां प्रीत्यै वितन्यते॥

१. वार्तिके संज्ञाग्रहणं प्रत्याख्यातम्, 'संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात्' इति। तथा चोक्तं भाष्ये ( ३. ७. १९ ) "संज्ञाग्रहणं चानर्थकम्। किं कारणम्? सर्वत्र घञो दर्शनात्। असंज्ञायामपि घञ् दृश्यते—'को भवता लाभो लब्धः', 'को भवता दायो दत्तः' इति।"

२. गाव्याद्यादिमदपशब्देभ्यो—मुद्रितपुस्तके।

( १. ४. ५५ ) इत्यत्र चकारेणैकसंज्ञाधिकारहेतुकबाधप्रसङ्गपरिहाराय कर्त्तुः समुच्चितत्वात् कर्त्तैव सन् हेतुसंज्ञो भवतीत्यर्थाश्रयणात् कर्तर्यन्तर्भूतत्वात्। तथा चोक्तं—'कर्त्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यत[1]' इति।

अवान्तरभेदमाह—

**भेदास्त्रयोविंशतिधा[2] पुनः ॥ १ ॥**

इति। तेषां कर्मादीनां भेदास्त्रयोविंशतिप्रकारा द्रष्टव्याः ॥ १ ॥

एवमुक्ते कथमित्याकाङ्क्षायां तत्पूर्त्यर्थं कर्त्रधीनत्वात् करणादीनां प्रवृत्तिनिवृत्त्योस्तस्य प्राधान्यात् प्रथमं तद्भेदं दर्शयन्नाह—

**तत्र पञ्चविधः कर्त्ता**

इति। तत्र तेषु कर्मादिकारकेषु मध्ये पञ्चप्रकारः कर्त्ता भवति। कथम्। स्वतन्त्रः कर्त्ता त्रिविधः अभिहितानभिहितकर्मकर्तृभेदेन। तथाभिहितानभिहितभेदः सुब्विषय एव क्वचित् प्रदर्शितोऽन्यत्राप्यूहनीय

---

१. प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि चाचरन्।
कर्त्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते ॥

इति वाक्यपदीयम् ( ३. ७. १२५ )। कर्त्तैव प्रयोजकः सन् हेतुर्भवति। शास्त्रे प्रदेशे विधिदेश इति यावत्। फलसाधनयोग्यः पदार्थो लौकिको हेतुर्द्रव्यगुणक्रियासाधारणः। क्रियाविषयत्वेन कारकं हेतुः प्रयोज्यक्रियाप्रयोजक इति विशेषः।

२. कर्त्तुः पञ्च भेदाः, कर्मणः सप्त भेदाः, करणस्य द्वौ भेदौ, सम्प्रदानस्य त्रयो भेदाः, अपादानस्य द्वौ भेदौ, अधिकरणस्य च चत्वारो भेदाः। एवं कर्मादीनां त्रयोविंशतिर्भेदाः।

इति सार्वत्रिकोऽप्ययमत्रैवोक्तः। हेतुकर्त्ता द्विविधः चेतनविषयोऽचेतनविषयश्चेति। अभिहिते 'देवदत्तः पचति, यज्ञदत्तस्तिष्ठती'ति। अत्र तिङा कर्त्तुरभिहितत्वादनभिहिताधिकारविहिततृतीयाविभक्तेरभावात् प्रथमैव भवति। तथा चोच्यते–'अभिहिते प्रथमाभाव' इति। अनभिहिते 'पच्यते देवदत्तेन, स्थीयते यज्ञदत्तेने'ति। अत्र 'स्वतन्त्रः कर्त्ता' ( १. ४. ५४ ) इति कर्तृसंज्ञायां 'कर्त्तृकरणयोस्तृतीया' ( २. ३. १८ ) इति तृतीया। कर्मकर्त्तरि 'भिद्यते कुसूलः स्वयमेव, पच्यते ओदनः स्वयमेवे'ति। भिनत्ति कुसूलं देवदत्त इत्यस्मिन्नर्थे कुसूलस्य कर्मणः सौकर्यातिशयात् कर्तृत्वविवक्षायामयं प्रयोगः। 'कर्मवत्कर्मणा तुल्यक्रियः' (३. १. ८७) इति कर्मवद्भावादात्मनेपदम्। चेतनविषये 'पाचयत्योदनं देवदत्तेने'ति। अत्र प्रयोजकव्यापारेण व्याप्यमानत्वात् प्रयोज्यस्य कर्मसंज्ञा प्राप्ता 'गतिबुद्धि[1]—' ( १. ४. ५२ ) इत्यादिना नियम्यते। तेन स्वव्यापारे स्वातंत्र्यमाश्रित्य कर्तृसंज्ञायां तृतीया भवति। तदुक्तं—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥[2]

---

१. 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति सूत्रम्।

२. वाक्यपदीयम् ( ३. ७. १२७ )। प्रयोज्यस्य स्वक्रियायां स्वातन्त्र्यम्, किन्तु प्रेषणरूपे प्रयोजकव्यापारे पारतन्त्र्यात् कर्मसंज्ञा प्राप्ता 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति सूत्रेण नियमिता। अतः स्वव्यापारे स्वातन्त्र्यात् स्वधर्मेण कर्तृत्वेन प्रयोज्यकर्ताभिधीयते।

इति । अचेतनविषये 'भिक्षा वासयति, कारीषोऽग्निरध्यापयती'ति । अचेतनानां प्रेषणाध्येषणव्यापारासम्भवात् कथं हेतुसंज्ञाप्राप्तिरिति चेत्, न, तत्समर्थाचरणसंद्भावात् । तथा चोक्तं भगवता भाष्यकारेण—'नावश्यं स एव वासं प्रयुङ्क्ते य आह उष्यतामिति ।[1] तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽपि वासं प्रयोजयति । भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वासं प्रयोजयन्ति । तथा कारीषोऽग्निर्निर्वात एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयती'ति । एवं वा कर्तुः पञ्चविधत्वम् । स्वतन्त्रकर्ता द्विविधः चेतनकर्ता अचेतनकर्तेति । हेतुकर्ता प्रेषणाध्येषणतत्समर्थाचरणलक्षणव्यापारभेदात् त्रिविधः । चेतने 'देवदत्तः पचती' त्यादि । अचेतने 'नदो वहति, कूलं पतति, एधाः पचन्ति, स्थाली पचती'ति । प्रवर्तयितृत्वादीनां धर्माणां शब्दविषयतया समाश्रयणादत्र कर्तृत्वं मुख्यमेव । तथा चोक्तं—

"धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि ।
कर्तृधर्मविवक्षायां शब्दात् कर्ता प्रतीयते ॥"[2]

---

१. "नावश्यं स एव वासं प्रयोजयति य 'इहोष्यताम्' इति ब्रवीति । किं तर्हि ?" इति मुद्रितपुस्तके ( महा० ३. १. २६ ) पाठ उपलभ्यते ।

२. वाक्यपदीयम् ३. ७. १०३ । शब्देन यस्य शक्तिलाभादिधर्माः प्रत्याय्यन्ते स कर्ता बोद्धव्यः, न तु वस्तुनि धर्माणामेषां सम्भवोऽन्वेष्टव्यः । व्याकरणे हि शब्दार्थोऽर्थः, न तु वस्त्वर्थः । शक्तिलाभादयो धर्मा अधस्ताद् दत्तयोः कारिकयोर्निर्दिष्टाः—

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात् ॥

इति । व्याकरणान्तरे[1] त्वर्थी कर्ता । 'तथायुक्तं च[2]–' ( १. ४. ५० ) इति लक्षणं चेतनाचेतनविषयं प्रणीतम् । प्रेषणे 'देवदत्तः कटं कारयति, यज्ञदत्त ओदनं पाचयती'ति । अध्येषणे 'छन्दोऽध्यापयति माणवकं, व्याकरणमध्यापयती'ति । निकृष्टविषयो नियोगः प्रेषणम्, अभ्यर्हितविषयोऽध्येषणमित्यनयोर्भेदः । ( तत्समर्थाचरणे ) 'भिक्षां वासयति, कारीषोऽग्निरध्यापयती'ति । उक्तं च—

"प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि चाचरन्नि"ति ।

एवं कर्तृभेदमुक्त्वा विभक्त्यनुक्रमानुसारेण कर्मादिभेदमाह—

**कर्म सप्तविधं भवेत् ।**

इति । कथं सप्तविधत्वम् ? उच्यते । 'कर्तुरीप्सिततमं कर्म' ( १. ४. ४९ ) इति त्रिविधं निर्वर्त्यं विकार्यं प्राप्यं चेति । यस्योपादानं मृदादि नास्ति, तन्निर्वर्त्यम् । यथा संयोगं करोतीति । यस्यापि सदपि तन्न

---

अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात् ।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते ।

वाक्यपदीयम् ३. ७. १०१–१०२

१. व्याकरणान्तरे कर्तुर्लक्षणद्वयं प्रणीतम्–'अर्थी कर्ता' 'तथायुक्तश्च' इति च । एतत्तु प्रणेतुः सूत्रनिर्माणकौशलं नास्ति, 'स्वतन्त्रः कर्ता' इत्येकेनैव सूत्रेण कर्तृलक्षणसिद्धौ सूत्रद्वयनिर्माणे गौरवात् । तथा चोक्तं हेलाराजकृतायां वाक्यपदीयव्याख्यायाम् ( ३. ७. १०३ )–'ततश्च व्याकरणान्तरे 'अर्थी कर्ता' 'तथायुक्तश्च' इति लक्षणद्वयं चेतनाचेतनविषयतया यत्प्रणीतं तन्न कौशलमित्युक्तं भवति ।'

२. 'तथायुक्तं चानीप्सितम्' इति सूत्रम् ।

विवक्ष्यते, तन्निर्वर्त्यम्। यथा घटं करोतीति। यस्यापि सतोऽप्यभेदो न विवक्ष्यते, किं तर्हि, भेद एव, तदपि निर्वर्त्यमेव। यथा मृदा घटं करोतीति। उक्तं च हरिणा—

"सती वा विद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते॥"[1]

इति। किमिदं निर्वर्त्यं नाम? असतः स्वरूपलाभ इति चेत्, न, सत्कार्यवादिमते तस्यानित्यत्वात्। सर्वपार्षदं हीदं शास्त्रम्। तस्माज्जन्मना प्रकाश्यमानत्वं निर्वर्त्यत्वम्। एतच्चोक्तम्—

"यदसज्जायते सद्वा जन्मना यत् प्रकाश्यते।
तन्निर्वर्त्यम्"[2]

इति। प्रकृतिविकारभेदविवक्षायां तु विकार्यं कर्म। अत्रावान्तरभेदो द्रष्टव्यः—मूलोच्छिन्नप्रकृतिकमुत्पन्नगुणान्तरप्रकृतिकं चेति। आद्यस्य काष्ठानि भस्म करोतीत्याद्युदाहरणम्, द्वितीयस्य सुवर्णं कुण्डलं करोतीति। विकार्यं तु कर्म द्वेधा व्यवस्थितम्। उक्तं च—

---

१. वाक्यपदीयम् ३. ७. ४७। यस्य निष्पाद्यमानस्य घटादेः प्रकृतिः सती वा उत्पत्तेः प्राग् विद्यमाना वा, यथा मृदादिकाः, उत्पत्तेः प्राग् अविद्यमाना वा, यथा शब्दस्य संयोगादिः परिणामिनी अभेदेन नाश्रीयते, 'मृदं घटं करोति' इत्यादिरूपतया भेदेन यदा विवक्ष्यते, तदा कर्मविदो 'निर्वर्त्यं कर्म प्रचक्षते।

२. वाक्यपदीयम् ३. ७. ४९। यद् उत्पत्तेः पूर्वमसद् घटादिकं जायत इति न्यायमतम्, उत्पत्तेः पूर्वं सद् वा घटादिकं जायत इति साङ्ख्यमतम्, तदुभयमपि जन्मना प्रकाश्यमानत्वान्निर्वर्त्यं कर्म उच्यते।

"प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् ।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥"[१]

इति । यत्र क्रियाकृतो विशेषः प्रत्यक्षानुमानागमैर्न ज्ञायते, केवलं क्रियया प्राप्यते, तत् प्राप्यम् । यथा आदित्यं पश्यति, नगरमुपसर्पति, ग्रामं गच्छतीति । निर्वर्त्ये तु कर्मण्यात्मलाभ एव विशेषः प्रत्यक्षादवधार्यते । विकार्येऽपि भस्मकुण्डलादौ प्रत्यक्षेण । क्वचिदनुमानात् । यथा वृक्षमवसिञ्चतीत्यत्र । तदानीं सूक्ष्मत्वाद् दुरवधारत्वेऽपि पश्चात् प्रचिततरविशेषदर्शनादनुमीयते नूनमवसेचनक्रियाकृतो विशेष एष इति । क्वचिदागमात् । 'व्रीहीन् प्रोक्षती' त्यत्र प्रोक्षणेन व्रीहिषु कश्चिदतिशयो गम्यत इत्यागमादवगम्यते । कर्ममीमांसकास्तेभ्योऽतिरिक्तं संस्कार्यमेतत्कर्मेत्यङ्गीकुर्वन्ति । उक्तं च—

"क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत् प्राप्यं कर्म कथ्यते ॥"[२]

इति । अत्र केचिच्चोदयन्ति । ननु नास्त्येव प्राप्यं कर्म, सर्वत्र क्रिया-

---

१. वाक्यपदीयम् ३. ७. ५० । प्रकृतेर्विनाशात् सम्भूतं यथा काष्ठादिभस्म । काष्ठादिप्रकृतेरेव विनाशाद् भस्मरूपत्वम् । अन्यद् विकार्यं कर्म गुणान्तरोत्पत्त्या भवति । यथा सुवर्णादि । एवं मूलोच्छिन्नप्रकृतिकमेकम्, उत्पन्नगुणान्तरप्रकृतिकञ्च द्वितीयमिति विकार्यं कर्म द्वेधा भवति ।

२. वाक्यपदीयम् ( ३. ७. ५१ ) । यत्र प्रत्यक्षादनुमानाद्वा क्रियाकृतानां विशेषाणां सिद्धिर्न जायते, तत् प्राप्यं कर्म कथ्यते । वाररुचसङ्ग्रहस्य व्याख्यायाम् आगमस्यापि सन्निवेशः कृतो विद्यते, वाक्यपदीये तु नास्ति तथेति विशेषोऽवगन्तव्यः ।

कृतविशेषावधारणात्। तथाहि—दृष्टिविषेण[1] विषधरेण निरीक्षितो विषयो ज्वलनज्वालावलीढो लक्ष्यत इति तावत् सम्प्रतिपन्नम्। तत्साधर्म्यादन्यत्रापि क्रियाहितो विशेषः समुन्नेयः। तैजसं हि चक्षुः प्राप्यकारीति तेन युक्तो विषयोऽवश्यं विक्रियते। यथा चायस्कान्तसन्निधौ लोहस्य भ्रमणं, कतकसन्निधौ च जलस्य प्रसादः। एवं सर्वत्र अत्रोच्यते। क्वचिद् विशेषदर्शनेऽपि सर्वत्र तथाभावे प्रमाणाभावः। किञ्च क्रियाफलेऽत्र विकारोऽभिमतः। आदित्यादीनां तु दर्शनादिक्रियाहेतुत्वं न फलता, कर्तृत्वात् फलस्य। यत्र पुनरत्र भवतो विकारबुद्धिः, तत्रापि न क्रियावशाद् विकारः, (अपितु) तेजःसम्पर्कादेव। अयस्कान्तादावपि वस्तुस्वभावादेव, न क्रियातः। न चेद् विकारयोगः, कथं तर्हि क्रियासिद्धावङ्गतेति चेद्, योग्यदेशापत्त्यादयो विशेषाः साधनतां सम्पादयन्ति प्राप्यकर्मण इत्यदोषः। यथोक्तम्—

'आभासोपगमो व्यक्तिः सोढत्वमिति कर्मणः।
विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः॥'[2]

---

१. दृष्टिविषेणेति। वाक्यपदीयस्याधस्तादुद्धृता कारिका निभालनीया-

विशेषलाभः सर्वत्र विद्यते दर्शनादिषु।
केषाञ्चित् तदभिव्यक्तिसिद्धिर्दृष्टिविषादिषु॥ (३. ७. ५२)

२. वाक्यपदीयम् ३. ७. ५३। 'योग्यदेशावस्थानेन दर्शनपथमवतरति विषय इति योग्यदेशापत्तिः आभासोपगमः स्वभावादस्य दर्शने उपकारः। योग्यदेशस्थितस्यापि नीहारादिप्रकाशप्रतिबन्धकभावाभावादिः प्रदीपादिनिमित्ता व्यक्तिः अङ्गम्। विषयस्य प्रकाशयोग्यदेशस्थितस्यासत्यावरकेऽदृश्यस्वभावः पिशाचादिरिति सोढत्वम्, बोधक्षमता, दृश्यस्वभावताङ्गम्। एतै-

इति। सूत्रान्तर्निर्दिष्टं चतुर्विधं तटस्थमनीप्सितमकथितमन्यपूर्वकं चेति। तटस्थे 'ग्रामं गच्छन् वृक्षमूलान्युपसर्पती' त्यादि। अनीप्सिते 'विषं भुङ्क्ते, व्याघ्रान् पश्यती' ति। उभयत्रापि 'तथायुक्तं चानीप्सितम्' ( १. ४. ५० ) इति कर्मसंज्ञा, ईप्सितादन्यदित्यर्थाश्रयणात्। अकथिते 'गां दोग्धि पयः, धनिनं याचते धनमि'ति। अत्र संज्ञान्तरैरपादानादिभिरकथिते गवादिके 'अकथितं च' ( १. ४. ५१ ) इति कर्मसंज्ञा। अन्यपूर्वके 'देवदत्तमभिक्रुध्यति, देवदत्तमभिद्रुह्यती'ति। अत्र 'क्रुधद्रुह—'[1] ( १. ४. ३७ ) इत्यादिना सम्प्रदानसंज्ञायां प्राप्तायां 'क्रुधद्रुहोरुपसृष्टयोः कर्म' ( १. ४. ३८ ) इति कर्मसंज्ञैव भवति, विशेषविहितत्वात्। तथा 'अक्षान् दीव्यती'त्यत्र पूर्वसूत्रेण करणसंज्ञमेव कर्मसंज्ञं भवति 'दिवः कर्म च' ( १. ४. ४३ ) इत्यनेन। एतच्चोक्तं हरिणा—

"निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तत्रेप्सिततमं कर्म चतुर्धान्यत् तु कल्पितम्॥
औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्॥"[2]

---

रतिशयैर्दर्शने साधनभावमनुभवति प्राप्यं कर्म। एते च दर्शनक्रियाहेतवो न तत्कृताः।'—इति हेलाराजकृता व्याख्या।

१ 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः' ( १ ४. ३७ ) इति सूत्रम्।

२. वाक्यपदीयम् ३. ७. ४५–४६। औदासीन्येन ताटस्थ्येन यत्प्राप्यं तदेकम्। यथा ग्रामं गन्तुर्वृक्षमूलादि। यत्कर्तुरनीप्सितं तद् द्वितीयम्। यथा चोरविषयादि। यत् संज्ञान्तरैरपादानादिसंज्ञाभिरनाख्यातमकथितमपि क्रिया-

इति ।

करणभेदमाह—

**करणं द्विविधं चैव**

इति । अत्र केचिद् बाह्याभ्यन्तरभेदेन द्विविधत्वमाचक्षते । यत् शरीरावयवादन्यत्, तद् बाह्यं, दात्रेण लुनाति, परशुना छिनत्तीति । आभ्यन्तरं मनःप्रभृति, मनसा पाटलिपुत्रं गच्छति, शिरसा देवं नमस्कुरुत इति । वयं तु स्वकरणान्यकरणभेदेनैतदुक्तमिति मन्यामहे । तत्र तत्र कर्तुरन्यद् दात्राद्यन्यकरणमित्युच्यते । यदा पुनः कारणान्तराभावप्रतिपादनाय कर्तुरेव विवक्षाप्रापितरूपभेदायत्तः करणभावः, तदा तत् स्वकरणमित्युच्यते, तैक्ष्ण्यमात्मना छिनत्तीत्यादि ।

**सम्प्रदानं त्रिधा मतम् ॥ २ ॥**

इति । अत्र स्वव्यापारभेदाद् भेदो द्रष्टव्यः । अनिराकरणं प्रेरणमनुमतिश्च स्वव्यापारः ।[१] अनिराकरणे 'उपाध्यायाय गां ददाती'त्यादि ।

---

निमित्तं तत् तृतीयम् । एतत् कर्म 'अकथितं च' इति सूत्रनिर्दिष्टं वेदितव्यम् । अन्यत् कारकं पूर्वं यस्य तच्चतुर्थम् ।

१. अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।

प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥

इति वाक्यपदीयकारिकायां (३. ७. १२९) सम्प्रदानस्य भेदत्रयं निरूपितम् । सम्यक् प्रदीयते यस्मै तत् सम्प्रदानमिति व्युत्पत्त्या सम्प्रदानशब्दोऽन्वर्थः । अन्वर्थत्वात्तस्य त्यागाङ्गमिति सम्प्रदानलक्षणं लभ्यते । त्यागस्याङ्गं निमित्तिमित्यर्थः । 'त्यागो दानं तस्याङ्गं विशेषणं समभिव्याहृतधात्वर्थे त्यागे विशेषणतया प्रतीयमानत्वं त्यागाङ्गत्वमित्यर्थः' इति वैयाकरणभूषणसारस्य शाङ्करीव्याख्या (पृ० २०७)।

स ह्युपाध्यायस्तद् गवाद्यभिसम्बध्यमानं न निराकरोति। यदि क्रुद्धो निराकुर्याद्, दानमेव न सम्पद्येत। परस्वत्वापादनपर्यन्तं हि तत्। प्रेरणे 'माणवकाय भिक्षां ददाति धार्मिक' इत्यादि। स हि माणवको धार्मिकं सम्प्राप्य तं प्रेरयति भिक्षां ददातु भवानिति। अनुमत्यां 'राज्ञे श्लोकं ददाति कविरि'त्यादि। स हि राजा श्लोकार्थपर्यालोचनेन कविं श्लाघमानस्तद् दानमनुमन्यते। अत्रानिराकरणस्याङ्गत्वं सम्भावनयानुमतेस्तु सर्वत्र भावात्। गोबलीवर्दन्यायेनात्र भेदः ॥ २ ॥

**अपादानं द्विधा भवेत्**

इति। चलाचलभेदेन द्वैविध्यम्। चले 'धावतोऽश्वात् पतितः, सार्थाद् गच्छतो हीन' इत्यादि। अचले 'ग्रामादागच्छति, पर्वतादवरोहती'त्यादि। ननु ध्रुवस्य स्थिरात्मकस्य चलत्वानुपपत्तेः सपरिस्पन्दानामश्वानामियं संज्ञा न प्राप्नोति। मैवम्। अत्र ध्रुवशब्द एकरूपवाची, न तु कूटस्थादिपर्यायः। ऐकरूप्यं चापायविषयमाश्रीयते। तदयमर्थः—अपाये साध्ये यद् ध्रुवं यदेकरूपं, तेनापायेनानाविष्टमिति यावत्। ततश्च धावतोऽश्वात् पतित इत्यत्र पतनक्रियावेशाद् देवदत्तस्यापाययुक्तत्वादध्रुवत्वम्। अश्वस्य तु तदभावाद् ध्रुवत्वमेव। उक्तं च हरिणा—

"द्रव्यस्वभावो न ध्रौव्यमिति सूत्रे प्रतीयते।
अपायविषयध्रौव्यं यत्तु तावद्विवक्षितम् ॥
सरणे देवदत्तस्य ध्रौव्यं पाते तु वाजिनः।
आविष्टं यदपायेन तस्याध्रौव्यं प्रचक्षते ॥"[1]

---

१. वाक्यपदीयम् ३. ७. १३८–१३९। यद् द्रव्यस्वभावभूतं ध्रौव्यं तद् 'ध्रुवमपायेऽपादानम्' इति सूत्रे नावगन्तव्यम्। सूत्रे तु अपाये साध्ये यद्

इति। केचित् तु पठन्ति—'सम्प्रदानं द्विधा मतम्। अपादानं त्रिधा चैव' इति। तस्मिन् पाठे शास्त्रीयलौकिकभेदेन सम्प्रदानस्य द्वैविध्यं, निर्दिष्टविषयमुपात्तविषयमपेक्षितविषयं चेत्यपादानस्य त्रैविध्यं च द्रष्टव्यम्। तत्र 'रुच्यर्थानां प्रीयमाणः' (१.४.३३) इत्यादिभिः सूत्रैर्विधीयमाना शास्त्रीयेत्युच्यते। 'कर्मणा[1]—' (१.४.३२) इति सूत्रेण विधीयमाना लौकिकी। यद्यपि सर्वा सम्प्रदानसंज्ञा शास्त्रेणैवोच्यते, तथापि हरिप्रभृतिभिः सम्प्रदीयते यस्मै स सम्प्रदानसंज्ञ इत्यन्वर्थसंज्ञाङ्गीकरणाल्लौकिक एव सम्प्रदानार्थः 'कर्मणा—' इति सूत्रेणोक्तः। 'रुच्यर्था'दिभिस्तु यस्यां कस्याञ्चित् संज्ञायां शेषषष्ठ्यां वा प्राप्तायां विधानाल्लौकिकार्थाभावाच्छास्त्रेणैव सम्प्रदानसंज्ञा कथ्यत इत्येवं शास्त्रीयलौकिकभेदः। तत्र 'रुच्यर्था' दिसूत्रेण कर्मसंज्ञायां प्राप्तायां [ सम्प्रदानसंज्ञा[2] ] विधीयते देवदत्ताय रोचते मोदक इति। अत्र हि रुचिधातुः प्रीणयत्यर्थे वर्तते; अनेकार्थत्वाद् धातूनाम्। देवदत्तं मोदकः प्रीणयतीत्यर्थः। तथा च प्रीयमाण इति विशेषणमुपपन्नं भवतीति देवदत्तो रुचेः कर्म। अपरे हेतुसंज्ञायां प्राप्तायामित्याहुः। शेषषष्ठ्यां प्राप्तायामित्यन्ये। एवं 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (१.४.३४) इति। अत्र ह्युख्यानकर्म सम्प्रदानं, ज्ञीप्स्यमानशब्दवाच्यत्वात् तस्येति दर्शने कर्मसंज्ञायां प्राप्तायां

---

ध्रुवमपायेनासंस्पृष्टं तद् ध्रुवमभिप्रेतम्। यदपायेन संस्पृष्टं भवति तदध्रुवं प्रत्येतव्यम्। 'धावतोऽश्वात् पतितः' इत्यत्राश्वस्यापायेनासंस्पृष्टत्वाद् ध्रौव्यं, पतितस्य देवदत्तादेरपायेन संस्पृष्टत्वादध्रौव्यम्।

१. 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सूत्रम्।

२. मुद्रितपुस्तके नास्ति।

विधानम् । देवदत्ताय श्लाघते इत्यस्य ह्ययमर्थः—देवदत्तं प्रति श्लाघमानस्तामेव श्लाघां तमेव ज्ञापयितुमिच्छतीति । अपरे यस्मा आख्यायते स सम्प्रदानमिति वदन्तः शेषषष्ठ्यां प्राप्तायामित्याहुः । एष मतभेदः कैयटमिश्रैर्वर्णितः–'ज्ञीप्स्यमाने विवदन्ते यस्मा आख्यायते, स सम्प्रदानं, य आख्यायते स इत्यन्य'' इति । 'धारेरुत्तमर्णः' ( १. ४. ३५ ) इति तु शेषषष्ठ्यां प्राप्तायाम् । देवदत्ताय शतं धारयतीत्यत्र हि शतधारणस्य देवदत्तो निमित्तं, तेन दत्तत्वाद् धनस्य । पुष्पेभ्यः स्पृहयतीत्यत्र पुष्पाणामीप्सिततमत्वात् कर्मसंज्ञायां प्राप्तायां 'स्पृहेरीप्सितः' ( १. ४. ३६ ) इति विधानम् । एवं 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' ( १. ४. ३७ ) इति । देवदत्ताय राध्यतीक्षत इत्यत्र देवदत्तस्य गणकप्रयोजकत्वाद्धेतुसंज्ञायां प्राप्तायां 'राधीक्ष्योर्यस्य विप्रश्नः' ( १. ४. ३९ ) इति वचनम् । एवं प्रत्या-

१. "ज्ञीप्स्यमाने विवदन्ते । केचिदाहुः—यस्मा आख्यायते स सम्प्रदानम् । य आख्यायते स इत्यन्ये ।" इति 'शप उपालम्भने' इति वार्तिके प्रदीपः ( महाभा० १. ३. २१ )। ज्ञीप्स्यमानस्य सम्प्रदानसंज्ञा भवति । ज्ञीप्स्यमानपदेन किं गृह्यत इति विषये विदुषां नास्ति मतैक्यम् । तदेव प्रकाशितं कैयटेन । एतत्सर्वं विविच्योन्मीलितं नागेशेन शब्देन्दुशेखरे—"ध्वनितं चेदं मतद्वयं 'शप उपालम्भने' इति वार्तिके कैयटेन 'ज्ञीप्स्यमाने विवदन्ते, य आख्यायते स सम्प्रदानमि'ति । आख्यायते बोध्यत इत्यर्थ इत्यन्ये । 'यस्मा आख्यायते स इति केचित्' इति ग्रन्थेन । 'प्रकृत्यर्थकर्मण एव ग्रहणमि' त्याद्याशयः । 'ण्यर्थकर्मण एव 'ज्ञीप्स्यमान' पदेन ग्रहणमि' त्यन्त्याशयः । अन्त्ये ज्ञाप्यमान इत्येव सिद्धेः, सन्स्वारस्येनोभयोरपि 'ज्ञीप्स्यमान' पदेन ग्रहणमिति बहवः" ।

ङ्भ्यां श्रुवः पूर्वस्य कर्ता' ( १. ४. ४० ) इति। देवदत्ताय गां प्रतिशृणोतीत्यत्र हि देवदत्तो याच्ञया गां प्रतिजानानं प्रयुङ्क्ते। 'अनुप्रतिगृणश्च' ( १. ४. ४१ ) इति कर्मसंज्ञायां प्राप्तायाम्। होत्रेऽनुगृणातीत्यस्य हि होतारं शंसन्तं प्रोत्साहयतीत्यर्थः। एवं सम्प्रदानस्य द्वैविध्यं व्याख्यातम्। अपदानस्य त्रैविध्ये हरिः प्रमाणम्। य आह–

"निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधापादानमुच्यते ॥"[1]

इति। कैयटमिश्रा अप्याहुः–'त्रिविधं चेदमपादानमि'[2]त्यादि। तत्र यस्य धातुनापायलक्षणो विषयो निर्दिष्टः, तन्निर्दिष्टविषयमपादानम्। यथा ग्रामादागच्छति, पर्वतादवरोहतीत्यादि। उपात्तः क्रियान्तरस्य गुणभावेन प्रधानभावेन वा यत्रापायलक्षणो विषयः, तदुपात्तविषयम्। यथा––बलाहकाद् विद्योतत इति। अत्र हि निःसरणाङ्गे विद्योतने विद्योतनाङ्गे निःसरणे वा द्युतिर्वर्तते।[3] बलाहकान्निसृत्य ज्योतिर्विद्योतते, बलाहकाद्वा विद्योतमानं निःसरतीत्यर्थः। तत्र कुसूलात्पचतीत्यादानाङ्गे पाके पचिर्वर्तते। एवं ब्राह्मणाच्छंसीति।[4] यत्र क्रिया-

---

१. वाक्यपदीयम् ३. ७. १३६।

२. कैयटमहाभागैः प्रदीपे ( म० भा० १ ४. २४ ) अपादानस्य त्रैविध्यं सोदाहरणं निरूपितं विद्यते। तत एवावसेयम्।

३. निःसरणाङ्गे विद्योतने निःसरणलक्षणोऽपायो विद्योतनस्य गुणभावेन धातुनोपात्तः, विद्योतनाङ्गे निःसरणे तु विद्योतनस्य प्रधानभावेन धातुनोपात्तः।

४. ब्राह्मणाद् गृहीत्वा शंसतीति ग्रहणाङ्गे शंसने शंसिर्वर्तते।

शब्दस्यानुपलब्धेरनुमीयमाना क्रिया, तदपेक्षितक्रियम्। यथा माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति। उपात्तविषये तु धातुनैवापायः स्वीकृतः, अत्र तु तदभाव इति भेदः।[1]

एवं विभक्त्यनुक्रमानुसारेण सम्प्रदानापादानभेदमुक्त्वा प्राप्तावसरं शेषलक्षणं सम्बन्धं कारकान्यत्वादतिक्रम्याधिकरणभेदमाह—

**तथाधारश्चतुर्विधः।**

इति। यथा कर्मादीनां भेदः, तथाधारस्यापि भेदश्चतुर्विध[2] इत्यर्थः। कथम्। व्यापकमौपश्लेषिकं वैषयिकं सामीपिकं चेति। व्यापके 'तिले तैलं, दध्नि सर्पिरि'ति। अत्र तिलादेस्तैलादिना समवायसम्बन्धात् सकलावयवव्याप्त्या व्यापकमित्युच्यते। औपश्लेषिके 'कटे आस्ते, रथे तिष्ठती'ति। अत्र सङ्गिनः कटादेः सकलावयवव्याप्त्यसम्भवात् कतिपयावयवव्याप्त्या कर्तुरुपश्लेषादौपश्लेषिकमेतत्। आधाराधेयसम्बन्धस्योपश्लेषस्य सर्वाधिकरणसाधारणत्वाद् गोबलीवर्दन्यायेनौपश्लेषिकस्यान्येषां च भेदः। वैषयिके 'खे शकुनयः, जले मत्स्या'

---

१. उपात्तविषये तु धातुनैवापायः स्वीकृतोऽनेकार्थत्वाद् धातूनाम्। यथा निःसरणाङ्गे विद्योतने विद्योतनाङ्गे निःसरणे वा विद्युतिर्वर्तते। अपेक्षितक्रियमित्यत्र तु क्रियापेक्षिताऽतस्तस्या अभावः स्वीक्रियते।

२. महाभाष्ये (६. १. ७२) त्वाधारस्य त्रिप्रकारत्वं निरूपितम्—"अधिकरणं नाम त्रिप्रकारम्—व्यापकम्, औपश्लेषिकम् वैषयिकम् इति।" रामचन्द्रेण प्रक्रियाकौमुद्यामाधारस्य चत्वारो भेदाः स्वीकृताः-औपश्लेषिकः सामीपिकः, विषयः, व्याप्तश्च। सारस्वतव्याकरणे षड् भेदा आम्नाताः—"औपश्लेषिकं सामीपिकमभिव्यापकं वैषयिकं नैमित्तिकमौपचारिकं चेति।"

इति । अत्राकाशादेस्तात्त्विकावयवाभावात् कल्पितप्रदेशतया सम्बन्धाद् वैषयिकमेतत् । अनन्यत्रभावश्चात्र विषयार्थः ।[1] सामीपिके 'गङ्गायां घोषः प्रतिवसती' त्यादि । अत्र प्रवाहरूपायां घोषवासस्याशक्यत्वात् समीपस्याधेयेन सम्बन्धात् सामीपिकमेतत् ।

नन्वत्र मुख्ये भवति गौणे कार्यं कथं भवेत् ।
नैवमस्मिन् प्रकरणे ह्ययं न्यायो न विद्यते ॥
साधकग्रहणात् सिद्धे यत् तमग्रहणं कृतम् ।
स्वरितेनेति सूत्रेणाप्यधिकं कार्यमादृतम् ॥

## करोति कारकं[2]

इति । अन्वर्थत्वयुक्तेयं संज्ञेत्यर्थः । अन्यथा 'अकथितमि' त्यत्राप्रधानवाच्याकथितशब्दाश्रयणे[3] 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यत्र

---

१. "विषयस्त्वनन्यत्रभावः । तत्र भवोऽप्युपचारेण विषयः ।" इति प्रक्रियाकौमुद्याः ( १. ४. ४५ ) विठ्ठलाचार्यकृता प्रसादाख्यव्याख्या ।

२. कारकमिति महती संज्ञा पूर्वाचार्यप्रसिद्धा । पाणिनिना नेयं परिभाषिता । महाभाष्यकारेण ( म० भा० १. ४. २३ ) करोतीति कारकमिति व्युत्पत्तिः प्रदर्शिता । कारकशब्दः क्रियापरोऽतः क्रियाया निर्वर्तकत्वं कारकत्वमिति स्थितम् । "साध्यत्वेन क्रियैव शब्दात् प्रतीयते इति क्रियाया निर्वर्तकस्य कारकसंज्ञाऽपादानादिसंज्ञा च प्रवर्तते ।" इति कैयट आह । "करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्त्या कारकशब्दः क्रियापरः । तेन क्रियायामित्यर्थः ।" इति नागेशोक्तिः ( बृहच्छब्देन्दुशेखरः, पृ० ७९८ ) द्रष्टव्या ।

३. '······वाच्यकथितशब्दाश्रयणे' इति मु० पु० ।

ब्राह्मणस्यापि कर्मसंज्ञा प्रसज्येत। अत्र च संज्ञाया भाव्यमानत्वाद् भूतविभक्त्यनुपपत्त्या भाव्यमान विभक्तेः प्रथमायाः स्थाने सुब्व्यत्ययेन सप्तमी कृता। न च कारकसंज्ञाया अपादानादिभिः समावेशः स्तम्बेरम इत्यादौ सप्तमीकृदन्तोत्तरपदप्रकृतिस्वरसिद्ध्यर्थो न प्राप्नोति, एकसंज्ञाधिकारादिति वाच्यम्। 'ध्रुवमपाय' इति योगविभागेन कारकसंज्ञाविधानादपादानमिति सूत्रे ध्रुवमपाय इत्यनुवर्तनात् कारकं सदपादानसंज्ञं भवतीत्येवमपादानादीनां विधानाच्च। न तु संज्ञाशब्दानां स्वरूपवाच्यत्वमेव युक्तमिति वाच्यम्। महत्याः संज्ञायाः करणादावृत्त्याद्यनुमानात् कारकं क्रियां कुर्वत् कारकसंज्ञं भवतीत्यर्थलाभात्। शक्तिश्च कारकं न तु द्रव्यम्। 'क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुरि'[1] त्युक्तत्वात्।

नन्वेवं स्वतन्त्रस्यैव क्रियानिष्पत्तौ व्यापारदर्शनात् तस्यैव कारकसंज्ञा स्यात्, न तु कर्मादीनाम्। न च सर्वेषां तद्वत्स्वातन्त्र्यं, कर्तृसंज्ञाया अपि सर्वेषां प्रसङ्गादित्याशङ्क्याह——

**सर्वं तत्स्वातन्त्र्यविवक्षया ॥ ३ ॥**

इति। कर्मादीनामपि कारकत्वमस्त्येव। तेषां कर्मादीनां यत् स्वव्यापारे स्वातन्त्र्यं, तद्विवक्षयेत्यर्थः। 'पूरणगुण——' ( २. २. ११ ) इति षष्ठीसमासप्रतिषेधोऽत्र न भवति, 'वर्तमानसामीप्ये——' ( ३.

---

१. "स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे। क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः॥" इति वाक्यपदीयम्, ३. ७. १।

३. १३१ ) इति निर्देशेन तस्यानित्यत्वज्ञापनात् ।[1] अन्ये त्वाहुः—लोकप्रसिद्धाः शुक्लादयो गुणशब्देन तत्र गृह्यन्ते, न तु संसर्गादिलक्षणलक्षिता इति । अयमाशयः—यद्यपि विक्लेदनादिप्रधानक्रियानिष्पादने कर्मादीनां स्वातन्त्र्यं नास्ति, तथापि विक्लित्तिज्वलनधारणावधिभावोपनिगमानुमत्यादिलक्षणेषु स्वव्यापारेषु स्वातन्त्र्यात् तदाश्रयेण कारकसंज्ञा तेषां प्रवर्तत एव । स्वव्यापारे स्वातन्त्र्यमनुभवतामेव प्रधानक्रियायामुपयोगात् कर्तृसन्निधावपि स्वव्यापारस्यानिवर्तनादविरोधः स्वातन्त्र्यपारतन्त्र्ययोः । अत एव करणं कारकमित्यादिसामानाधिकरण्योपपत्तिः । कर्तृसंज्ञा[2] तु कारकाधिकारादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतेर्नियमार्थत्वात् स्वातन्त्र्यमेव यस्य तस्य विधानात् पारतन्त्र्योच्छुरितानां कर्मादीनां न भवतीति न का ( कदा ? ) चिदनुपपत्तिः ॥ ३ ॥

एवं कारकसंज्ञां प्रतिपाद्य संज्ञावाक्यानां विधिवाक्यशेषभूतत्वात् तत्र विहितां सुब्विभक्तिं नियमोक्तिमुखेन दर्शयति—

---

१ 'तदशिष्यं संज्ञाप्रमाणत्वात्' ( १. २. ५३ ) इति निर्देशाद् गुणेन निषेधोऽनित्य इति तात्पर्यं प्रकाशितमाचार्यैः । अतः 'अर्थगौरवम्' 'बुद्धिमान्द्यम्' इत्यादिसमाससिद्धिर्भवति । ( द्रष्टव्या सिद्धान्तकौमुद्यां 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन'' इति सूत्रस्य व्याख्या ) अत्र 'वर्तमानसामीप्ये वर्तमानवद्वा' सूत्रे सूत्रकारस्य वर्तमानसामीप्य इति प्रयोगो निषेधस्यानित्यत्वं ज्ञापयतीति प्रभाकृद्भिर्व्याख्यातम् ।

२. कारकत्वादेव स्वातन्त्र्ये लब्धे स्वतन्त्रः कर्तेत्यत्र पुनः स्वातन्त्र्यश्रुतिर्नियमार्था । अतस्तस्यैव कर्तृसंज्ञा विधीयते, यस्य स्वतः स्वातन्त्र्यम् , न पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य ।

**तत्र कर्तर्यभिहिते प्रथमैव विधीयते ।**

इति । तिङ्कृत्तद्धितसमासैरभिहिते कर्तरि प्रातिपदिकमात्रस्याव-शिष्टत्वात् तत्र विहिता प्रथमैव भवति, नान्या विभक्तिः । तत्र तिङा-भिहिते देवदत्तः पचतीत्याद्युदाहरणम् । छन्दोऽध्यायी देवदत्त इति कृता । श्राद्धी श्राद्धिको ब्राह्मण इति तद्धितेन । ऊढरथोऽनड्वानिति समासेन ।

**तृतीया वाथ षष्ठी वा स्मृतानभिहिते द्विधा ॥ ४ ॥**

इति । वाशब्दः समुच्चये ।[1] अथशब्दः पादपूरणार्थः मङ्गलार्थो वा । 'मङ्गलमध्यानि शास्त्राणि प्रथन्ते'[2] इति हि भाष्यकारः प्राह । यथा भूवादयो धातवः ( १. ३. १ ) इत्यत्र वकारः । अत्र विभक्तिः सामान्यं, तस्य द्वित्वसंख्या भेदिका इति सामान्यभेदकधर्मलक्षण-विधार्थविहितधाप्रत्ययोपपत्तिः । एवं सर्वत्र । अनभिहिते कर्तरि द्विप्रकारा विभक्तिः तृतीया षष्ठी च । तृतीया 'ओदनः पच्यते देव-दत्तेन' । षष्ठी 'भवतः शायिका, भवत आसिका' । 'कर्तृकर्मणोः कृति'[3]

---

१. "वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे । समुच्चये च" इति मेदिनी ( २८५।७४–७५ ) ।

२. "माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वकारागमं प्रयुङ्क्ते । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीर-पुरुषाणि भवन्ति आयुष्मत्पुरुषाणि च, अध्येतारश्च मङ्गलयुक्ता यथा स्यु-रिती"ति 'भूवादयो धातवः' इति सूत्रे महाभाष्यकारः ।

३. कृद्योगे अनुक्ते कर्तरि कर्मणि च षष्ठी स्यादित्यर्थः । 'कृष्णस्य

( २. ३. ६५ ) इति कर्तरि षष्ठी । राज्ञां मतः[1], राज्ञां बुद्धः, 'क्तस्य च वर्तमाने[2]' (२. ३. ६७) इति षष्ठी । 'न लोका[3]--' (२. ३. ६९) इति प्रतिषेधे प्राप्ते वचनम् । भवतः कटः कर्त्तव्यः । 'कृत्यानां कर्तरि वा' ( २. ३. ७१ ) इति षष्ठी ॥ ४ ॥

**तथा कर्मण्यभिहिते विभक्तिं विद्धि पूर्विकाम् ।**

इति । तथेति कर्तृवदित्यर्थः । पूर्वैव पूर्विका । यावादित्वात्[4] कन् । प्रथमामित्यर्थः । ओदनः पच्यते देवत्तेनेत्याद्युदाहरणम् ।

**अनुक्ते प्रथमां हित्वा पञ्चमीं सप्तमीं तथा ॥ ५ ॥**

इति अनुक्ते कर्मण्येता[5] विभक्तीर्हित्वा वर्जयित्वा परिशिष्टा द्वितीयादयो भवन्ति । द्वितीया 'ग्रामं गच्छति, ओदनं पचति' । तृतीया 'पित्रा सञ्जानीते, मात्रा सञ्जानीते'[6] । 'संज्ञोऽन्यतरस्यां कर्मणि' ( २. ३.

---

कृतिरि'ति अनुक्ते कर्तरीत्यस्य 'जगतः कृष्णः' इति च अनुक्ते कर्मणीत्यस्योदाहरणम् ।

१. 'मतिबुद्धिपूजार्थेभ्यश्च' ( ३. २. १८८ ) इति वर्तमानार्थे क्तप्रत्ययो भवति ।

२. वर्तमानार्थस्य क्तस्य प्रयोगे अनुक्ते कर्तरि षष्ठी स्यादित्यर्थः ।

३. 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति सूत्रम् ।

४. 'यावादिभ्यः कन्' ( ५. ४. २९ ) इति सूत्रेण कन् भवति ।

५. अनुक्ते कर्मणि प्रथमापञ्चमीसप्तमीविभक्तयो न भवन्ति, अवशिष्टा द्वितीयादयो विभक्तयो भवन्ति ।

६. 'सम्प्रतिभ्यामनाधाने' ( १. ४. ४६ ) इत्यात्मनेपदम् । उत्कण्ठापूर्वकं स्मरणमाध्यानम् । तत्र तु परस्मैपदं भवति, मातरं मातुर्वा सञ्जानाति ।

२२ ) इति तृतीया। चतुर्थी 'ग्रामाय गच्छति, ग्रामाय व्रजति'। 'गत्यर्थकर्मणि'[1]--' ( २. ३. १२ ) इत्यादिना चतुर्थी । एधेभ्यो व्रजति, फलेभ्यो व्रजति । 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' ( २. ३. १४ ) इति चतुर्थी। न त्वा तृणाय मन्ये, न त्वा बुसाय मन्ये। 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' ( २. ३. १७ ) इति चतुर्थी। षष्ठी–अपां स्रष्टा, पुरां भेत्ता । 'कर्तृकर्मणोः कृति' ( २. ३. ६५ ) इति षष्ठी । 'अधीगर्थदयेशां कर्मणि' इत्यादिभिर्विहिता षष्ठी नात्रोदाहरणम् । तत्र 'शेष' इत्यधिकारात् कर्मणि शेषत्वेन विवक्षिते षष्ठी विधानात् ।[2] 'कर्तृकर्मणोः कृति' इत्यत्र तु पुनः कर्मग्रहणाद् न शेषाधिकारः।[3] तथा च धर्मानुस्मरणमित्यादौ समासो भवति । अन्यथा 'शेष' इत्येव सिद्धायां षष्ठ्यां पुनर्विधानान्नियमार्थाद् यथा मातुः स्मृतमित्यादौ समासो न भवति, तथात्रापि न स्यात् । सूत्रप्राप्त्यपेक्षयैतदुक्तं, न तूपसङ्ख्यानमप्यपेक्ष्य । तेनाधीती व्याकरण इत्यादौ 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' ( वा. २. ३. ३६ ) इति कर्मणि सप्तमी भवति ।। ५ ।।

**तृतीया पञ्चमी चैव षष्ठी च करणे त्रिधा ।**

---

१. 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति सूत्रम् ।

२. 'अधीगर्थाः स्मरणार्थाः ।' 'दय दानगतिरक्षणेषु', 'ईश ऐश्वर्ये' एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति ।" इति काशिका २. ३. ५२ ।

३. अत्र शेषाधिकारो निवृत्तः, पुनः कर्मग्रहणात् । अन्यथा च कर्तरि च कृतीति स्यात् ।

इति। अनुक्त इत्यनुषङ्गः। उक्ते तु मांसपचनो वह्निरित्यादौ पूर्ववत् प्रथमा द्रष्टव्या। एवं सम्प्रदानापादानाधिकरणेषु गोघ्नोऽतिथिः, प्रस्कन्दनः स्तम्बः, निशानिशाणे (?) त्यादौ प्रथमा द्रष्टव्येति भावः। तृतीया 'दात्रेण लुनाति, परशुना छिनत्ति'। पञ्चमी 'स्तोकान्मुक्तः, अल्पान्मुक्तः'। 'करणे च स्तोका'[1]—'(२. ३. ३३) इत्यादिना पञ्चमी। षष्ठी 'सर्पिषो जानीते, मधुनो जानीते'। 'ज्ञोऽविदर्थस्य करणे' (२. ३. ५१) इति षष्ठी। घृतस्य यजते, सोमस्य यजते। 'यजेश्च करणे' (२. ३. ६३) इति षष्ठी। यद्यपि 'ज्ञोऽविदर्थस्य करण' इत्यादौ शेषाधिकारात् कर्मादिव्यतिरिक्तस्य च शेषत्वान्न करणे षष्ठीति सिद्धान्तः, तथापि प्रयोगबाहुल्यप्रतिपादनाय भूतपूर्वं करणत्वमाश्रित्य 'षष्ठी च करणे त्रिधे' त्युक्तमिति केचित्। अन्ये[2] तु 'तृतीया पञ्चमी चैव करणे कारके द्विधे'ति पठन्ति।

**षष्ठी चतुर्थी तृतीया सम्प्रदाने त्रिधा मता ॥ ६ ॥**

इति। षष्ठी, 'पुरुषमृगश्चन्द्रमसो दातव्यः'। 'चतुर्थ्यर्थे बहुलं छन्दसि' (२. ३. ६२) इति षष्ठी। अत्रापि पूर्ववत् षष्ठीप्रदर्शनोपपत्तिः। 'चतुर्थी च तृतीया च सम्प्रदाने द्विधा मते'ति वा पाठः। चतुर्थी 'उपाध्यायाय गां ददाति'। 'चतुर्थी सम्प्रदाने' (२. ३. १३) इति चतुर्थी। तृतीया 'दास्या मालां सम्प्रयच्छते, वृषल्या सम्प्रयच्छते'।

---

१. 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इति सूत्रम्। स्तोकादिभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः। यदा तु करणत्वेन धर्ममात्रं विवक्ष्यते, न द्रव्यम्, तदा स्तोकादीनामसत्त्ववचनता।

२. करणे षष्ठी न भवतीति मतान्तरम्, अत एव पाठभेदः।

दास्यै मालां ददातीत्यर्थः । 'दाणश्च सा चेच्चतुर्थ्यर्थे' ( १. ३. ५५ ) इत्यात्मनेपदम् । अशिष्टव्यवहारे[1] तृतीयाया वक्तव्यत्वाच्चेच्छब्दस्य चार्थवृत्तित्वाद्वा तृतीया ॥ ६ ॥

**पञ्चमी खल्वपादाने वर्तते न ततोऽन्यतः ।**[2]

इति । खल्वित्यवधारणे । अन्यत इति आद्यादित्वात् प्रथमार्थे तसिः । अपादाने कारके पञ्चम्येव । ततः पञ्चम्या अन्या विभक्तिर्नास्ति । वृक्षात् पर्णं पततीत्याद्युदाहरणम् ॥

**सप्तम्येवाधिकरणे**

इति । स्थाल्यां पचतीत्याद्युदाहरणम् । ननु च 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' ( २. ३. ६४ ) इति द्विरह्नो भुङ्क्त इत्यादावधिकरणे षष्ठ्यपि भवति । नैषाधिकरणे, शेषाधिकारादित्यदोषः । एवमपि पुष्येण पायसमश्नीयादित्यादौ 'नक्षत्रे च लुपि' ( २. ३. ४५ ) इत्यधिकरणे तृतीयापि भवति । सा किं न दर्शिता । एवं तर्हि एवकारो भिन्नक्रमः । अधिकरण एव सप्तमी, न कारकान्तर इति सप्तमी नियम्यते । कथं तर्हि अधीती व्याकरण इत्यादौ 'क्तस्येन्विषयस्य—' ( वा. २. ३. ३६ ) इति कर्मणि सप्तमी । उपसङ्ख्यानानपेक्षया चैतदुक्तमित्यदोषः । अन्ये त्वस्य व्याख्यानस्यासामञ्जस्यं मन्यमानाः पाठान्तरं वर्णयन्ति—"पञ्चमी खल्वपादाने तथाधिकरणे द्विधा । तृतीया सप्तमी चैव" इति ॥

---

१. 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकेनाशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया भवति ।

२. अन्या विभक्तिरित्यर्थः ।

प्रकृतमुपसंहरति—

**कारकस्यैष सङ्ग्रहः ॥ ७ ॥**

इति। अत्र यदि सामान्येन येन केनाप्यभिहितेऽनभिहिते च कर्मादिकारके विभक्तयो भवन्तीत्युच्यते, तदा कटं करोति भीष्ममुदारं शोभनं दर्शनीयमित्यादौ ईप्सिततमविशेषणविशिष्टकटवस्तुगतकर्मणः साकल्येन तस्मादुत्पद्यमानया द्वितीययाभिहितत्वाद् भीष्मादिभ्यो द्वितीया न स्यात्।[१] यथा कृतः कटः शोभनो दर्शनीय इत्यादौ करोतेरुत्पद्यमानेन क्तप्रत्ययेन सर्वस्य कर्मणोऽभिहितत्वादन्येभ्यो द्वितीया न भवति। तस्माद् विशेषविषयमभिहितानभिहितत्वमत्राभिमतम् ॥७॥

के पुनस्तद्विशेषा इत्यत्राह—

**समासस्तद्धितस्तिङ्कृच्चत्वारस्तेऽभिधायकाः।**
**त एवानभिसम्बन्धाद् भवन्त्यनभिधायकाः ॥ ८ ॥**

इति। अनभिसम्बन्धादिति समासादीनां कर्मादिनाभिधेयेनाभिधायक-

---

१. "उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिर्वक्तव्या। क्व? कटं करोति भीष्ममुदारं शोभनं दर्शनीयमिति। कटशब्दादुत्पद्यमानया द्वितीययाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति।" इति महाभाष्यम् २. ३. १।

२. तिङ्कृत्तद्धितसमासैः प्रायेणाभिधानं भवति। हरिः सेव्यत इति तिङा, लक्ष्म्या सेवित इति कृता, शतेन क्रीतः शत्य इति तद्धितेन प्राप्त आनन्दो यं स प्राप्तानन्द इति च समासेनाभिधानम्। प्रायेणेत्यस्य फलमस्ति—क्वचिन्निपातेनाभिधानमिति। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमित्यस्योदाहरणम्।

त्वेन सम्बन्धाभावादित्यर्थः। न्यायसिद्धं चैतत्, न तु वचनलभ्यम्। तथाहि--इह यस्माद् या विभक्तिरुत्पद्यते, तथा, तद्वाच्यगतकर्मादि वक्तुं द्योतयितुं वा शक्यते, नान्यवाच्यगतमपि। कटशब्दश्च कटत्वजातियुक्तमर्थमाह, न तु भीष्माद्याकारविशिष्टम्। ततश्च यथा तद्विशिष्टप्रतिपादनाय तेभ्योऽपि द्वितीयादयो भवन्त्येव। क्तप्रत्ययस्तु प्रकृत्यर्थस्य क्रियारूपस्य कर्मत्वाभावात् तं प्रति यस्य कर्मभावः, तमभिधत्त इति युक्तं भीष्माद्याकारविशिष्टकटकर्माभिधानं तस्य ॥८॥

अभिधायकोक्तिप्रसङ्गायातसमासस्वरूपमाह--

**षोढा समासः सङ्क्षेपाद्**

इति। अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिकर्मधारयभेदेन षट्प्रकारः समासः। सङ्क्षेपात् सङ्कोचाद् अवान्तरभेदाविवक्षयेत्यर्थः। तत्र द्विगुकर्मधारयोस्तत्पुरुषेऽन्तर्भावाद् गोबलीवर्दन्यायेन भेदः।

**अष्टाविंशतिधा[१] पुनः।**

इति। अवान्तरभेदविवक्षायां त्वष्टाविंशतिप्रकार इत्यर्थः।

**नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥ ९ ॥**

इति। यदि नित्यत्वमनित्यत्वं च भेदकधर्म आश्रीयते, तदा द्वैविध्यम्। तत्र नित्यसमासः कारणभेदात् त्रिधा भवति। कश्चिद् [२]विभाषाधि-

---

१. अष्टप्रकारस्तत्पुरुषः षड्भेदः कर्मधारयः, षड्भेदो बहुव्रीहिः, द्विप्रकारो द्विगुः, चतुर्भेदो द्वन्द्वः, द्विधाऽव्ययीभावश्चेत्यष्टाविंशतिर्भेदाः।

२. 'विभाषा' (२. १. ११) इति सूत्रस्याधिकारात्। अपपरिबहिरञ्चवः पञ्चम्या' (२. १. १२) इत्यादिसूत्राणि विभाषयाधिक्रियन्ते।

कारात् प्राग् विधानात् । यथा—अधिस्त्रीत्यादिः[1] । कश्चिन्नित्याधिकार-विहितत्वात् । यथा—उद्दालपुष्पप्रभञ्जिकादिः[2] 'नित्यं क्रीडाजीविकयोः' ( २. २. १७ ) इत्यादिना विहितः। कश्चित् सामर्थ्यात् । यथा सुराजा, ब्राह्मणार्थः सूप इत्यादिः । अत्र स्वादीनां विग्रहवाक्यस्थानां शोभनाद्यर्थप्रतिपादनसामर्थ्याभावादन्येन विग्रहप्रदर्शनात् सामर्थ्याद् वाक्याभावलक्षणं नित्यत्वम् । अनित्यसमासो विभाषाधिकारविहितापत्रिगर्तादिः[3] । एवं लुगलुक्त्वाभ्यामपि द्वैविध्यम् । लुग् 'राजपुरुषः, ब्राह्मणकम्बलः' । अलुग् 'दूरान्मुक्तः, अल्पान्मुक्तः' । 'स्तोकान्तिक[4]—' ( २. १. ३९ ) इति समासः। 'पञ्चम्याः स्तोकादिभ्यः' ( ६. ३. २ ) इत्यलुक् । एवमानङ्वधिकालुक्[5] प्रकरणस्थौजः[6]-सहोम्भस्तमसःप्रभृतिसूत्रविहितौजसाकृतादयो द्रष्टव्याः ॥ ९ ॥

---

१. स्त्रीष्वधिकृत्य कथा प्रवर्तत इति अधिस्त्रि । 'अव्ययं विभक्तिसमीप—' ( २. १. ६ ) इति सूत्रेणि सिद्धिः ।

२ उद्दालः श्लेष्मातकः तस्य पुष्पाणि तेषां प्रभञ्जनम् । उद्दालपुष्पप्रभञ्जिकेति क्रीडाविशेषस्य संज्ञा ।

३. अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः । 'अपपरिबहिरञ्चवः पञ्चम्या' इति समासः ।

४. 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति सूत्रम् ।

५. अलुगधिकारः प्रागानङः । 'आनङ् ऋतो द्वन्द्वे' ( ६. ३. २५ ) इति सूत्रात् प्राक् ।

६. 'ओजःसहोम्भस्तमसस्तृतीयायाः' ( ६. ३. ३ ) इति सूत्रम् । ओजसाकृतम्, सहसाकृतम् , अम्भसाकृतम् इत्युदाहरणानि ।

अष्टाविंशतिधेत्युक्तं विवृणोति—

**तत्राष्टधा तत्पुरुषः**

इति। सप्तविभक्त्यन्तनञ्तत्पुरुषभेदेनाष्टप्रकारस्तत्पुरुषः—पूर्वं कायस्य पूर्वकायः, अपरकायः। 'पूर्वापराधर[1]—' ( २. २. १ ) इत्यादिना समासः। अर्धं पिप्पल्याः अर्धपिप्पली। 'अर्धं नपुंसकम्' ( २. २. २ ) इति समासः। द्वितीयं भिक्षायाः द्वितीयभिक्षा, तृतीयभिक्षा। 'द्वितीयतृतीय[2]—' इत्यादिना समासः। प्राप्तो जीविकां प्राप्तजीविकः, आपन्नजीविकः। 'प्राप्तापन्ने च द्वितीयया' ( २. ३. ४ ) इति समासः। मासो जातस्य स मासजातः, संवत्सरजातः। 'कालः परिमाणिना' (२. २. ५) इति समासः। द्वितीयातत्पुरुषः—कष्टं श्रितः, कष्टश्रितः, कान्तारश्रितः। 'द्वितीया श्रिता[3]—' (२. १. २४) इत्यादिना समासः। खट्वारूढो जाल्मः। 'खट्वा क्षेपे' ( २. १. २६ ) इति समासः। अहरतिसृता मुहूर्ताः, रात्र्यतिसृता मुहूर्ताः। 'कालाः' ( २. १. २८ ) इति समासः। मुहूर्तसुखं, सर्वरात्रकल्याणी। 'अत्यन्तसंयोगे च' ( २. १. २९ ) इति समासः। तृतीयातत्पुरुषः—शङ्कुलया खण्डः शङ्कुलाखण्डः[4]। 'तृतीया तत्कृता[5]—' ( २. १. ३० ) इति समासः।

---

१. 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति सूत्रम्।

२. 'द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्' इति सूत्रम्।

३. 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति सूत्रम्।

४. शंकुलाखण्डो देवदत्त इति भाष्योदाहरणम्। शंकुलाकृतखण्डनक्रियावानित्यर्थः।

५. 'तृतीया तत्कृतार्थेन गुणवचनेन' इति सूत्रम्।

मासेन पूर्नः मासपूर्वः, पितृसदृशः । 'पूर्वसदृश[1]—'( २. १. ३१ ) इत्यादिना समासः । अहिना हतः अहिहतः, नखैर्भिन्नः नखभिन्नः । 'कर्तृकरणे कृता बहुलम्' ( २. १. ३२ ) इति समासः । दध्युपसिक्त ओदनो दध्योदनः । 'अन्नेन व्यञ्जनम्' (२. २. ३४) इति समासः । गुडेन मिश्रा धानाः गुडधानाः । 'भक्ष्येण मिश्रीकरणम्' ( २. १. ३५ ) इति समासः । चतुर्थीसमासः—यूपदारु, कुण्डलहिरण्यं, ब्राह्मणसूपः, कुमारबलिः । 'चतुर्थी तदर्था[2]—'( २. १. ३६ ) इति समासः । पञ्चमीसमासः—वृकभयं, दस्युभयम् । 'पञ्चमी भयेन' ( २. १. ३७ ) इति समासः । सुखापेतः, कल्पनापोढः । 'अपेतापोढ[3]—'(२. १. ३८) इति समासः । षष्ठीसमासः—राजपुरुषः, ब्राह्मणकम्बलः । 'षष्ठी' ( २. २. ८ ) इति समासः । ब्राह्मणयाजकः, क्षत्रिययाजकः । 'कर्तरि च' ( २. २. १६ ) इति प्रतिषेधे प्राप्ते 'याजकादिभिश्च' ( २. २. ९ ) इति समासः । सप्तमीसमासः—अक्षशौण्डः, अक्षधूर्तः । 'सप्तमी शौण्डैः' ( २. १. ४० ) इति समासः । साङ्काश्यसिद्धः, आतपशुष्कः । 'सिद्धशुष्कपक्वबन्धैश्च' ( २. १. ४१ ) इति समासः । तीर्थध्वाङ्क्षः तीर्थकाकः । 'ध्वांक्षेण क्षेपे' ( २. १. ४२ ) इति समासः । मासदेयं, संवत्सरदेयम् । 'कृत्यैर्ऋणे' ( २. १. ४३ ) इति समासः । अरण्येतिलकाः[4], अरण्येमासकाः । 'संज्ञायाम्' ( २. १. ४४ ) इति समासः ।

---

१. 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति सूत्रम् ।

२. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति सूत्रम् ।

३. 'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' इति सूत्रम् ।

४. अदन्तादुत्तरस्याः सप्तम्याः संज्ञायामलुक ।

'हलदन्तात् सप्तम्या[1]—' ( ६. ३. ९ ) इत्यलुक् । पूर्वाह्णकृतम्, अपराह्णकृतम् । 'क्तेनाहोरात्रावयवाः' ( २. १. ४५ ) इति समासः । तत्रकृतम्, तत्रभुक्तम् । 'तत्र' ( २. १. ४६ ) इति समासः । अवतप्तेनकुलस्थितम्, उदकविशीर्णम् । 'क्षेपे' (२. १. ४७) इति समासः । पात्रेसमिताः, उदुम्बरमशकाः । 'पात्रे समितादयश्च' ( २. १. ४८ ) इति समासः । नञ्समासः—अब्राह्मणः, अवृषलः । 'नञ्' ( २. २. ६ ) इति समासः ।

**षड्विधः कर्मधारयः ।**

इति । सामान्यविशेषकुत्सितपूर्वपदोपमानपूर्वपदोपमितपूर्वपदवर्णोभयभेदेन षडविधत्वम् । तत्र सामान्यशब्देन 'विशेषणं विशेष्येण—' ( २. १. ५७ ) इति सामान्येन विहितः समास उच्यते । विशेषशब्देनापि तत्प्रपञ्चार्थं ये विहिताः 'पूर्वापरप्रथम[2]—'( २. १. ५८ ) इत्यादिभिः सूत्रैः, ये च 'पूर्वकाल[3]—'( २. १. ४९ ) इत्यादिभिः पूर्वादिपूर्वनिपाताद्यर्थं, तेषामुभयेषां ग्रहणम् । यद्यपि कुत्सितपूर्वपदादीनामपि विशेषेऽन्तर्भावः, तथापि प्रसिद्धत्वप्रतिपादनार्थं प्रपञ्चार्थं च भेदेनोपादानं कृतम् सामान्ये 'नीलोत्पलं, रक्तोत्पलम् । नीलं च तदुत्पलं चेति विगृह्य भेदकलक्षणविशेषणवाचिसुबन्तस्य भेद्यलक्षणविशेष्यवाचिना सह 'विशेषणं विशेष्येण बहुलम्' इति समासः । विशेषे 'स्नातानुलिप्तः, दग्धप्ररूढः' । 'पूर्वकालैक'-इत्यादिना समासः ।

---

१. 'हलदन्तात् सप्तम्याः संज्ञायाम्' इति सूत्रम् ।

२. 'पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च' इति सूत्रम् ।

३. 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति सूत्रम् ।

पूर्वेषुकामशमी, अपरेषुकामशमी। 'दिक्संख्ये संज्ञायाम्' (२. १. ५०) इति समासः। संज्ञायां नियमार्थोऽयम्। पूर्वपुरुषः, अपरपुरुषः। 'पूर्वापर—' इत्यादिना समासः। एवमापादपरिसमाप्तेर्यानि सूत्राणि वर्णसूत्रवर्जितानि, तेषामुदाहरणान्यूह्यानि। कुत्सितपूर्वपदे 'वैयाकरण[1]खसूचिः, याज्ञिककितवः'। यः पृष्टो निष्प्रतिभत्वाद् अहो विमलं गगनमिति प्रश्नं विस्मारयति, स एवमुच्यते खसूचिश्चासौ वैयाकरणश्चेति। तेन वैयाकरणत्वकुत्सनेन पूर्वपदस्य कुत्सितत्वात् 'कुत्सितानि कुत्सनैः[2]' (२. १. ५३) इति विशेष्यपूर्वपदार्थः समासो भवति। एवं याज्ञिककितव इत्ययाज्ययाजनतत्पर उच्यते। उपमानपूर्वपदे 'शस्त्रीश्यामा, कुमुदश्येनी'। शस्त्रीव श्यामेति विगृह्य 'उपमानानि सामान्यवचनैः' (२. १. ५५) इति समासः। अत्र शस्त्र्यादेः सामानाधिकरण्यप्रसिद्ध्यर्थमुपमेयवृत्तित्वमभेदेनोपचाराद्दूरीक्रियते। पूर्वावस्थाश्रयेण चोपमानानीत्युच्यते। एवञ्च गौणत्वाद् 'विशेषणं विशेष्येण बहुलम्' (२. १. ५७) इति समासो न प्राप्नोत्ययमारम्भः। उपमेयपूर्वपदे 'पुरुषव्याघ्रः, पुरुषसिंहः'। पुरुषोऽयं व्याघ्र इवेति विगृह्य 'उपमितं व्याघ्रादिभिः[3]—' (२. १. ५६) इति समासः। एतद्वचने न केवलं गौणत्वमेव हेतुः, किन्तु विशेषपूर्वपदनिपातप्रापणापि। वर्णोभयपदे 'कृष्णशबलः, लोहितशबलः' समानाधिकरण्योपपत्तयेऽवयवद्वारेण समुदायाभिधानाद् गौणत्वादयमारम्भः।

---

१. अत्र वैयाकरणत्वं कुत्स्यते। खसूचित्वमत्र निन्दाप्रकारः वैयाकरणत्वं निन्दाविषयः। 'वैयाकरणश्चौरः' इत्यत्र न तथाऽत एव न समासः।

२. कुत्स्यते एभिरिति कुत्सनानि, करणे ल्युट्।

३. 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सूत्रम्।

षड्विधश्च बहुव्रीहिः

इति। तत्र 'अनेकमन्यपदार्थे' ( २. २. २४ ) इति विहितो द्विविधः— द्विपदो बहुपदश्चेति। चित्रगुः, शबलगुः, सुसूक्ष्मजटकेशेन, सुनताजिनवाससा, इत्युदाहरणम्। केचित् तु तद्गुणसंविज्ञानातद्गुणसंविज्ञानभेदेन द्वैविध्यमाहुः। तस्यान्यपदार्थस्य सम्बन्धी गुण उपसर्जनीभूतो वर्तिपदार्थो व्यवहारे संविज्ञायते यस्मिन् बहुव्रीहौ, स तद्गुणसंविज्ञानः। तस्मादन्यतोऽतद्गुणसंविज्ञानः। पूर्वस्योदाहरणं दीर्घविषाणमानयेति। अत्र यद्यप्यन्यपदार्थस्यैव शब्दवाच्यत्वं, तथापि समवायस्य प्रवृत्तिनिमित्तत्वाद् अपृथक् सिद्धयोरेव च तद्भावात् सामर्थ्यादग्न्यानयने पात्रानयनवद् वर्तिपदार्थस्यापि कार्ययोगो भवति। तथा शुक्लवाससमानयेत्याद्यप्युदाहरणं, तत्र संयोगः प्रवृत्तिनिमित्तम्। विशेषणत्वविवक्षायां चेदमुदाहरणम्। यदा तु काकनिलयनादिवदुपलक्षणत्वेन विवक्ष्यते यः शुक्लवासा दृष्टः स आनीयतामिति, तदेतन्नोदाहरणम्। अपरस्य 'चित्रगुः शबलगु'रित्याद्युदाहरणम्। अत्र हि स्वस्वामिसम्बन्धस्य प्रवृत्तिनिमित्तत्वाद् देशान्तरगतयोरपि स्वस्वामिभावस्याविहितत्वात् पुरुषस्यैव कार्ययोगः, न तु गवाम्। सूत्रान्तरविहितश्चतुर्विधः——सङ्ख्योत्तरपदोऽन्तरालाभिधेयकः सरूपोपलक्षितः सहपूर्वपदश्चेति। सङ्ख्योत्तरपदस्तावद् 'उपदशाः, उपविंशाः द्वित्राः, द्विदशाः'। 'सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये' ( २. २. २५ ) इति समासः। 'बहुव्रीहौ सङ्ख्येये डच्' (५. ४. ७३) इति डच् समासान्तः। अन्तरालाभिधेये 'दक्षिणपूर्वा दिक्, पूर्वोत्तरा'। दक्षिणस्याश्च पूर्वस्याश्च दिशोऽन्तरालमिति विगृह्य 'दिङ्नामान्यन्तराले' ( २. २. २६ ) इति समासः। सरूपोपलक्षिते 'केशाकेशि,

दण्डादण्डि'। केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तमिति विगृह्य 'तत्र तेनेदमिति सरूपे' ( २. २. २७ ) इति समासः। 'इच् 'कर्मव्यतिहारे' ( ५. ४. १२७ ) इति समासान्तः। 'अन्येषामपि दृश्यते' ( ६. ३. १३७ ) इति पूर्वपदस्य दीर्घः। तिष्ठद्गुप्रभृतिषु 'इच् कर्मव्यतिहारे' इति पाठादव्ययत्वात्[२] सुब् लुक्। इतिकरणाद्[३] विवक्षार्थाद् युद्ध-क्रियायामेव समासः। सहपूर्वपदे 'सपुत्रः, सच्छात्रः'। सह पुत्रेणागत इति विगृह्य 'तेन सहेति तुल्ययोगे' ( २. २. २८ ) इति समासः। 'वोपसर्जनस्य' ( ६. ३. ८२ ) इति सभावः।

## द्विगुराभाषितो द्विधा ॥ १० ॥

इति। एकवदनेकवद्भेदेन। एकवद्भावे तावत् 'पञ्चपूलाः समाहृताः पञ्चपूली, दशपूली। 'तद्धितार्थोत्तरपदसमाहारे च' (२. १. ५१) इति समासे कृते 'सङ्ख्यापूर्वो द्विगुः' (२. १. ५२) इति द्विगुसंज्ञायां 'द्विगु-रेकवचनम्' (२. ४. १) इत्येकवद्भावे च 'स नपुंसकम्' (२. ४. १७) इति नपुंसकलिङ्गतायां प्राप्तायाम् 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' ( वा. २. ४. ३० ) इति स्त्रीत्वविज्ञानाद् 'द्विगोः' ( ४. १. २१ ) इति ङीपि रूपम्। अनेकवद्भावे पञ्चकपालः पुरोडाशः, पञ्चक-

१. परस्परग्रहणं परस्परप्रहरणं च कर्मव्यतिहारः।

२. तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठोऽस्ति अतोऽव्ययीभावत्वमव्ययत्वञ्च निष्पन्नम्।

३. 'इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति। ततो ग्रहणं प्रहरणं कर्मव्यतिहारे युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते।'—काशिका २. २. २७।

पालौ पञ्चकपालाः । पञ्चसु कपालेषु संस्कृत इति विगृह्य तद्धितार्थे विवक्षिते समासे कृते 'संस्कृतं भक्षाः' ( ४. २. १६ ) इति विहितस्याणो 'द्विगोर्लुगनपत्ये' ( ४. १. ८८ ) इति लुक् । समाहारद्विगोरेकवद्भावविधानादिह न भवति, पञ्चनावप्रियः, दशनावप्रियः। उत्तरपदे समासे कृते 'नावो द्विगोः' ( ५. ४. ९९ ) इति टच् समासान्तः ।

द्वन्द्वश्चतुर्विधो ज्ञेयः

इति । अत्र कश्चित्—समुच्चयान्वाचययोरर्थग्रहणादसामर्थ्याच्च द्वन्द्वाभावादितरेतरसमाहारविहितो द्विविध एव द्वन्द्वः । ततश्चार्थस्य चातुर्विध्यं प्रतिपादयितुं तद्गतचातुर्विध्यारोपेण चतुर्विध इत्युक्त इति प्रतिपादितवान् । वयं तु वदामः—अर्थभेदाद् द्विविधस्यापि द्विपदबहुपदभेदेन द्वैविध्याच्चतुर्विध इत्युक्तमिति । इतरेतरयोगे द्विपदस्य 'प्लक्षन्यग्रोधौ, देवदत्तयज्ञदत्तौ', बहुपदस्य 'प्लक्षन्यग्रोधधवखदिरपलाशाः, देवदत्तयज्ञदत्तविष्णुमित्राः' । समाहारे द्विपदस्य 'वाक्त्वचम्, स्रुक्त्वचम्' । वाक् च त्वक् च इति विगृह्य समाहारे द्वन्द्वे कृते 'द्वन्द्वाच्चुदषहान्तात् समाहारे' (५. ४. १०६) इति टच् समासान्तः। प्राण्यङ्गानां द्वन्द्व एकवद्भवतीत्येकवद्भावादेकवचनम् । बहुपदस्य पाणिपादशिरोग्रीवम् । पूर्ववदेकवद्भावः । वृक्षा इत्यादिवदुद्भूतावयवभेदः समूह इतरेतरयोग इति तत्र द्विवचनबहुवचने । तिरोहितावयवभेदस्तु समाहारः । तत्र वनमित्यादिवदेकवचनं सिद्धम् । 'द्वन्द्वश्चे'त्याद्येकवद्भावप्रकरणं तु विषयविभागार्थं—प्राण्यङ्गानां समाहार एव द्वन्द्वः, वृक्षमृगादीनामुभयत्र, अन्येषामितरेतरयोग इति।

अव्ययीभावो द्विधा मतः ।

इति । अव्ययपूर्वपदनामपूर्वपदभेदेन । आद्यस्योदाहरणं 'कुम्भस्य समीपमुपकुम्भं' 'यावदमत्रं ब्राह्मणानामन्त्रयस्वे'त्यादि । समीपार्थे यदव्ययं वर्तते, तत् समस्यते, 'यावदवधारणे' ( २. १. ८ ) [1]इत्येताभ्यां समासः । 'अव्ययीभावश्च' ( १. १. ४१ ) इत्यव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' ( २. ४. ८२ ) इति सुब्लुकि प्राप्ते 'नाव्ययीभावाद्' ( २. ४. ८३ ) इत्यादिनाम्भावे 'अमि पूर्वः' (६. १. १०७) इति पूर्वरूपे रूपम् । अपत्रिगर्तं वृष्टो देवः, परित्रिगर्तम् । 'अपपरिबहिरञ्चवः पञ्चम्या' (२. १. १२) इति समासः । आपाटलिपुत्रं वृष्टो देवः । 'आङ् मर्यादाभिविध्योः' ( २. १. १३ ) इति समासः । अभ्यग्नि शलभाः पतन्ति, प्रत्यग्नि । 'लक्षणेनाभिप्रती आभिमुख्ये' ( २. १. १४ ) इति समासः । अनुवनमशनिर्गता । 'अनुर्यत्समया' ( २. १. १५ ) इति समासः । अनुगङ्गं वाराणसी । 'यस्य चायामः' ( २. १. १४ ) इति समासः । नामपूर्वपदस्य अस्त्यत्र किञ्चित् सूपः सूपप्रति, शाकप्रति । 'सुप् प्रतिना मात्रार्थे' ( २. १. ९ ) इति समासः । एकपरि, द्विपरि । 'अक्षशलाकासङ्ख्याः परिणा' ( २. १. १० ) इति समासः । तिष्ठद्गु, वहद्गु । 'तिष्ठद्गुप्रभृतीनि च' ( २. १. १७ ) इति समासः । पारेगङ्गं, मध्येगङ्गम् । 'पारेमध्ये षष्ठ्या वा' ( २. १. १८ ) इति समासः । निपातनादेत्वं च । द्विमुनि

---

१. 'यावदवधारणे' इत्येकं सूत्रं निर्दिष्टमस्ति, 'अव्ययं विभक्तिसमीप—' इति सूत्रस्य निर्देशो न विद्यते, अत 'एताभ्याम्' इति प्रयोगो नास्ति समीचीनः ।

व्याकरणं, त्रिमुनि व्याकरणम् । 'सङ्ख्या वंश्येन' ( २. १. १९ ) इति समासः । सप्तगङ्गं, द्वियमुनम् । 'नदीभिश्च' ( २. १. २० ) इति समासः । उन्मत्तगङ्गं नाम देशः, लोहितगङ्गम् । 'अन्यपदार्थे च संज्ञायाम्' ( २. १. २१ ) इति समासः ।

एवमष्टाविंशतिप्रकारतामुपपाद्य गुरुसंज्ञाकरणसामर्थ्यायातपूर्वाचार्यसंज्ञापरिग्रहप्रयुक्ततदीयावधिलब्धसमासार्थप्राधान्यमाह--

**तेषां पुनः समासानां प्राधान्यं**

इति । अत्र समासशब्देन समासार्थो लक्ष्यते । नहि संज्ञानां प्राधान्यं समस्ति, संज्ञिप्रत्यायनैकनिष्ठत्वात् । नापि संज्ञिनां शब्दरूपाणाम्, अर्थप्रत्यायनैकपरत्वात् । अथवा तेषां समाससंज्ञाभाजां योऽर्थः, तस्य प्राधान्यमस्तीत्यर्थः ॥

भेदमाह--

**तच्चतुर्विधम् ॥ ११ ॥**

इति । [1]पूर्वपदोत्तरपदान्यपदार्थोभयपदार्थप्राधान्यभेदेन । तत्रोत्तरपदार्थप्रधानस्तत्पुरुषः । यथा--राजपुरुषः, कष्टश्रित इत्यादि । अत्र पुरुषादेः क्रियायोगो विशेषणयोगश्च । शोभनो राजपुरुष आनीयतामिति प्राधान्यं तस्य । राज्ञस्तु तदुपलक्षणत्वेनोपादानात् क्रियाविशेषणयोगाभावादप्राधान्यम् । नञ्समासस्यापि भाष्येऽब्राह्मणादिपदार्थप्राधान्यं स्थापितम् । क्वचित् तु पूर्वपदार्थप्रधानः । यथैकदेशिसमासः 'प्राप्तापन्ने--' ( २. २. ४ ) सूत्रविहितश्च पूर्वकायः[2] प्राप्तजीविक

१. 'प्राप्तापन्ने च द्वितीयया' इति सूत्रम् ।

२. 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' ( २. २. १८ ) इति सूत्रेणैकदेशिसमासः ।

इति । 'कालाः परिमाणिना' ( २. २. ५ ) इति विहित उत्तरपदार्थ-प्रधान एव । मासजातः[१], संवत्सरजात इति । तथा च तत्र भाष्यम्—'किंप्रधानोऽयं समासः उत्तरपदार्थप्रधान' इत्यादि । कर्मधारयस्याप्युत्तरपदार्थप्राधान्यप्राचुर्यम् । उपमितसमासस्तु पूर्वपदार्थप्रधानः । तद्धितार्थद्विगुस्तद्धिताविनाभावी तदर्थप्राधान्यात् स्वार्थविवेकानर्हः । उत्तरपदद्विगुरपि त्रिपदबहुव्रीह्येकदेशीभूतस्तदर्थमेवानुसरति । समाहारद्विगुस्तु यदि समाह्रियत इति समाहारः तदोत्तरपदार्थ प्रधानः । पञ्चपूल्यानीयतामित्यादौ समाह्रियमाणानां पूलानां शब्दवाच्यत्वात् । अथ समाहरणं समाहारः, तदान्यपदार्थप्रधानः । अव्ययीभावः प्रायेण पूर्वपदार्थप्रधानः । यथोपकुम्भादयः । सूपप्रतीत्यादयस्तूत्तरपदार्थ-प्रधानाः । द्वित्रादयोऽन्यपदार्थप्रधानाः । तथा च तद्विधायकसूत्रस्य कैमर्थक्यं पूर्वपक्षीकृत्य वार्तिककृता 'अशिष्यः सङ्ख्योत्तरपदलक्षणः सङ्ख्येयवार्ताभिधायित्वादि'ति । अयमर्थः—'सङ्ख्ययाव्यया[२]—' ( २. २. २५ ) इत्यादिना विहितः समासो न वक्तव्यः, पूर्वसूत्रेणैव सिद्धत्वात् । तथा हि—द्वित्रा त्रिचतुरा इत्यादौ द्वौ त्रयो वेति वार्थः प्रतीयते । अधिकविंशा, अधिकत्रिंशा इत्यादावधिका विंशतिर्यासां ता अधिकविंशा गाव इति सङ्ख्येयम् । तत्र 'अनेकमन्यपदार्थे' ( २. २. २४ ) इत्येव सिद्धमिति । भाष्यकारस्तु—'उपदशाः अधिक-दशा'इत्यादौ दशशब्दस्य सङ्ख्येयवृत्तित्वादुपशब्दस्य च समीपवाचि-त्वादन्यपदार्थाभावादव्ययादिग्रहणस्य कर्त्तव्यतां स्थापयन् उपदशा-

---

१. मासो जातस्य मासजातः । केचन 'मासो जातस्य यस्य स' इति पठन्ति । स त्वपपाठः ।

२. 'सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये' इति सूत्रम् ।

दीनामन्यपदार्थप्राधान्यं नानुमन्यते । द्वित्रादयस्तु तत्पक्षेऽप्यन्यपदार्थप्रधानाः । तथा च भाष्यम्—'तत्र प्रथमानिर्दिष्टं सङ्ख्याग्रहणं शक्यमकर्तुमि'ति[1] । दक्षिणपूर्वादयोऽप्यन्तरालाभिधायिनोऽन्यपदार्थप्रधानाः । तथा च वार्तिकम्—'दिक्समाससहयोगयोश्चान्तरालप्रधानाभिधानात् तृतीयासप्तम्योश्च क्रियाभिधानादि'ति[2] । इतरेतरद्वन्द्व उभयपदार्थप्रधानः । अथ समूहसमूहिनोर्भेदो नेत्युच्येत, तर्ह्ययमप्युभयपदार्थप्रधान इत्येषा दिक् । नहि शब्दानामभिधानवैचित्र्यं परिगणनार्हम् । अनर्थकं च तत्परिगणनं लोकव्यवहाराधीनत्वादर्थावधारणस्य । अत एव सूत्रकारेण पूर्वाचार्यलक्षणनिरसनपरं सूत्रं प्रणीतं—'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्'[3] ( १. २. ५६ ) 'कालोपसर्जने च तुल्यम्' ( १. २. ५७ ) इति । संग्रहकारस्तु बालव्युत्पत्त्यर्थं गुरुसंज्ञाकरणाशयं दर्शितवान् ॥ ११ ॥

एवं समासमभिधायोक्त्यनुक्रमानुसारेण तद्धितस्वरूपमाह—

**सामान्याव्ययभावाख्यस्त्रिविधस्तद्धितो मतः ।** इति ।

अत्र सामान्यशब्देन प्रत्ययास्ते विवक्षिताः ।
येऽपत्यभाजो रक्तादावुत्पन्नाश्चातुरर्थिकाः ॥

---

१. 'सङ्ख्ययाव्ययासन्ना······' इति सूत्रे भाष्यम् ।

२. 'दिक्समाससहयोगयोश्चान्तरालप्रधानाभिधानात्' इत्येव वार्तिकं 'तेन सहेति तुल्ययोगे' ( २. २. २७ ) इति सूत्र उपलभ्यते । 'तृतीयासप्तम्योश्च क्रियाभिधानादि'त्यंशस्तत्र नोपलभ्यते ।

३. प्रधानप्रत्ययाभ्यामर्थाभिधानं भवतीति पूर्वाचार्यैरुक्तम् । पाणिनिना तु तत्प्रत्याख्यातम् अर्थस्य लोकतः सिद्धेः ।

शैषिकास्तसिना मुक्ता विकारावयवार्थजाः ।
वहत्यवधयः प्राग्घितीयक्रीतावधी अपि ॥
प्राग्वतीया वतिश्चान्त्यस्ततो नानाञ्विवर्जिताः ।
खञ्खशालच्प्रभृतयो मत्वर्थीयास्ततः परे ॥
पाशबाद्याः शसः प्राग् ये मान्तकृत्वोर्थवर्जिताः ।
समासान्ताश्च ते सर्वे सामान्यप्रत्यया मताः ॥
तसिर्नानाञ् वतिस्तेनेत्यादिसूत्रत्रयेण यः ।
तसिल्प्रभृतयो मान्तौ कृत्वोर्थाश्च शसादयः ॥
अव्ययाख्या मना भावशब्देन त्वतलादयः ।
प्रकृतिः प्रत्ययोऽर्थश्च तद्विशेषणमेव च ॥
उदाहरणमित्येतान्युन्नेयानीह पण्डितैः ।
सङ्ग्रहप्राणनाशः स्यात् तद्धितार्णवमज्जने ॥

अथ समासतद्धितयोरुत्पत्तौ विशेषमाह—

**पदानां तु समर्थानां प्रथमाद्वा प्रसूयते ॥ १२ ॥**

इति । अयमर्थः—समाससंज्ञा तावत् 'समर्थः पदविधिः'[1] (२.१.१) इति समर्थवचनात् समर्थयोर्द्वयोर्बहूनां वा सर्वेषां प्रवर्तते, न त्वेकस्य । तेन

---

१. सामर्थ्यं द्विविधम्—व्यपेक्षालक्षणम् एकार्थीभावलक्षणं च । स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद् यः परस्परान्वयस्तद् व्यपेक्षालक्षणं सामर्थ्यम् । विशिष्टो अपेक्षा व्यपेक्षेति व्युत्पत्तेः, सम्बन्धार्थः समर्थ इति व्युत्पत्तेश्च । सापेक्षा राज्ञः पुरुष इत्यादिवाक्य एव भवति । एकार्थीभावलक्षणं सामर्थ्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग्गृहीतानां पदानां समुदायशक्त्या विशिष्टार्थप्रतिपादकत्वरूपम् । इदं राजपुरुष इत्यादिवृत्तावेव भवति ।

राज्ञः पुरुष इति विगृह्य राजपुरुषशब्दयोरुभयोरेका संज्ञा भवति। एवं पदविधित्वात् तद्धितोऽपि प्राप्तः। 'समर्थानां प्रथमाद्वा' ( ४.१.८२ ) इत्यधिकारात् समर्थानां पदानां मध्ये प्रथमानिर्दिष्टादेवोत्पद्यते, नान्यस्मात्। तेनोपगोरपत्यमिति विगृह्य 'तस्यापत्यम्' ( ४.१.९२ ) इत्यत्र तस्येत्यस्य प्रथमनिर्दिष्टत्वादुपगुशब्दादेवाण् प्रत्ययः, नापत्यशब्दादपि। औपगव इति। वाग्रहणाद् विकल्पेनायं प्रत्ययः। तेन-तद्धितेन वाक्यस्य बाधा न भवति। समर्थानामिति प्रथमादिति च स्वार्थिकप्रत्ययावधिरधिकारः, यतः सामर्थ्यस्य सम्बन्ध्यन्तरापेक्षत्वात् स्वार्थिकेषु च तदभावादुपस्थानानुपयोगः। वाग्रहणं त्वापञ्चमाध्यायपरिसमाप्तेस्तसिलादीनां विकल्पार्थमनुवर्तत एव। केषाञ्चिन्नित्यत्वं प्रकारान्तरेण॥ १२॥

एवं तद्धितं सङ्गृह्य तदनन्तरं निर्दिष्टतिङमाह—

**तिङां तु नव पूर्वार्धं लादेशावपरौ द्विधा॥**

**परस्मैपदमाख्यातं तङानावात्मनेपदम्॥ १३॥**

इति। अत्र पूर्वार्धशब्देन तत्र भवाः प्रत्यया लक्ष्यन्ते। न च तदर्थत्वेऽपि तदीयलिङ्गसङ्ख्यानुरोधः, लक्षणविषये स्वलिङ्गसङ्ख्यापरित्यागात्। यथा गङ्गायां घोष इत्यत्र तीरार्थत्वेऽपि स्त्रीलिङ्गतैव। अपरशब्देन शतृक्वसू विवक्ष्येते। द्विधाशब्देन द्विधाभूतावुच्येते। आन इत्युत्सृष्टानुबन्धयोः शानच्कानचोः सामान्यनिर्देशः। अयमर्थः—'तिप्तस्झि'[1]—( ३. ४. ७८ ) इत्यादिसूत्रनिर्दिष्टानामष्टाद-

[1] 'तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्' इति सूत्रम्।

शानां प्रत्ययानां मध्ये पौर्वाधिका नव तिबादयो मसन्ताः प्रत्ययाः, लडादेशः शता, लिङादेशः क्वसुश्च लादेशत्वात् 'लः परस्मैपदम्' ( १.४.९९ ) इति परस्मैपदसंज्ञका वेदितव्याः । परिशिष्टास्तादयो महिङन्ताः लडादेशलिडादेशौ शानच्कानचौ च 'तङानावात्मनेपदम्' ( १.४.१०० ) इति परस्मैपदसंज्ञापवादात्मनेपदसंज्ञकाः । शानन्नादयस्तु न लडादेशा इति स्थापितं भाष्ये ॥ १३ ॥

तिङामवान्तरसंज्ञामाह--

**परस्मा आत्मनेभागे वचनानि त्रिधा त्रिधा ।**
**त्रयस्ते पुरुषा ज्ञेयाः प्रथमो मध्यमोत्तमौ ॥ १४ ॥**

अत्र परस्मैपदशब्देनात्मनेपदशब्देन च 'अप्रत्यये तथैवेष्टम्' इत्युत्तरपदलोपविधानात् परस्मैपदात्मनेपदे उच्येते, यथा देवभीमादिभिः शब्दैर्देवदत्तभीमसेनादयः । वचनशब्देनोच्यतेऽनेनार्थ इति कृत्वाप्रत्यय उच्यते । परस्मैपदभाग आत्मनेपदभागे च ये प्रत्ययास्त्रिधा त्रिधाभूत्वा त्रयः सम्पन्नाः, ते क्रमेण प्रथपुरुषमध्यमपुरुषोत्तमपुरुषसंज्ञका वेदितव्याः । ते 'तिप् तस् झि' इति प्रथमः, 'सिप् थस् थ' इति मध्यमः, 'मिप् वस् मस्' इत्युत्तमः । एवं 'त आतां झ' इति प्रथमः, 'थास् आथां ध्वम्' इति मध्यमः, 'इट् वहि महिङ्' इत्युत्तमः । सूत्रे त्रीणि त्रीणीत्यस्य विशेष्यप्रदर्शनेनायुक्तताशङ्काप्रतिक्षेपार्थं वचनानीत्युक्तम् । अन्यथा 'प्रत्यया ये त्रिधा त्रिधा' इत्युच्येत । एवमुत्तरत्र पदानीत्यपि तानीत्यस्य विशेष्यप्रदर्शनार्थम् ॥ १४ ॥

**एकद्विबहुसंज्ञानि पदान्येकैकशस्तिङाम् ।**

इति । पदशब्देन पद्यतेऽनेनार्थ इति प्रत्यय उच्यते, न तु परिभाषितं

सुप्तिङन्तम् । तिङां यानि त्रीणि त्रीणि भूत्वा प्रथमादिसंज्ञायुक्तानि पदानि, तान्येकैकश एकमेकं पदं क्रमेणैकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । तिबित्येकवचनं, तसिति द्विवचनं, झीति बहुवचनम् । एवमन्यत्राप्यूह्यम् । ननु एकैकश इति कथं साधुः, यावता शसैव वीप्साया द्योतितत्वाद् द्विर्वचनेन न किञ्चित्प्रयोजनम् । न च यथा क्रियासमभिहारे[1] विधीयमानो लोट् स्वस्य तदर्थाभिव्यञ्जनासामर्थ्याद् द्विर्वचनमपेक्षते लुनीहि लुनीहीत्येवायं लुनातीति, तद्वदत्राप्यस्त्विवति वाच्यम् । 'द्विशो ददाति', 'तान्येकवचनद्विवचनबहुवचनान्येकशः' ( १. ४. १०२ ) इत्यादौ विनापि द्विर्वचनेन वीप्साभिव्यक्तिदर्शनात् । किञ्च 'येन नाप्राप्त'[2] न्यायेन शस् द्विर्वचनं बाधते । तथा च जिनेन्द्रहरदत्ताभ्यामुक्तम्---'नित्यवीप्सयोः' ( ८. १. ४ ) इति द्विर्वचने प्राप्ते तदपवादः शस् विधीयत इति । अत्रोच्यते । यथा वृषशब्देनैव वृषार्थप्रतिपत्तावपि वृषभशब्दः प्रयुज्यते, तथैकश इत्यनेन वीप्साया द्योतितत्वेऽपि क्वचिद् द्विर्वचनमपि प्रयुज्यते । न हि शब्दानां शक्तिवैचित्र्यं सामान्यतो दृष्टेनानुमानेन व्यवस्थापयितुमलम् । यथा स्त्रीत्वं क्वचिदेकेन प्रत्ययेन व्यज्यते । क्वचिद् द्वाभ्यां गार्ग्यायणी वात्स्यायनीति । दृषदित्यादौ प्रातिपदिकेनैव । शस्द्विर्वचनयोः सह-

---

१. 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' ( ३. ४. २ ) इति सूत्रेण समभिहारविशिष्टक्रियावचनाद् धातोर्लोट् प्रत्ययो भवति । पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः ।

२. 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' ( परिभाषेन्दुशेखरः, ५७ ) इति परिभाषया बाधः ।

प्रयोगोऽन्यत्रापि दृश्यते 'एकैकश पितृसंयुक्तादि'ति। न च सामान्यविशेषभावमात्रमेव बाध्यबाधकभावनिमित्तं, किं तर्हि, विरोधोऽपीति वार्तिककारस्य मतम्। य आह—'श्नंबहुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेध' इति तदाश्रयेणैतत् प्रयुक्तम्। भाष्यकारस्तु विरोधाभावेऽपि तक्रकौण्डिन्यन्यायेन बाध्यबाधकभावमिच्छति। तन्मते सूत्रकारकल्पः सङ्ग्रहकारस्तद्वच्छान्दसं प्रयोगं कृतवानिति मन्तव्यमित्यलमतिप्रसङ्गेन।

एवं संज्ञामुपपाद्य तस्या विधिविषयत्वान्नियममुखेन तदर्थं दर्शयति—

**परस्मै कर्तरि ज्ञेयः**

इति। 'शेषात् कर्तरि परस्मैपदम्' ( १. ३. ७८ ) इत्यादिना आपादपरिसमाप्तेर्यत् परस्मैपदं विहितं, तत्कर्तर्येव।

व्यावर्त्यमाह—

**न भावे नापि कर्मणि ॥ १५ ॥**

इति। याति देवदत्तः, अनुकरोति देवदत्तः, पराकरोति देवदत्त इत्याद्युदाहरणम् ॥ १५ ॥

**आत्मने त्रिषु विज्ञेयः**

इति। 'अनुदात्तङित आत्मनेपदम्' ( १. ३. १२ ) 'कर्तरि कर्मव्यतिहारे' ( १. ३. १४ ) इत्यादिना प्रकरणेन यदात्मनेपदं नियतं, तत त्रिषु कारकेषु भवति ॥

**भावे कर्तरि कर्मणि।**

इति । तत्र विशेषमाह––

धातोरकर्मकाद् भावे

इति । एतच्च 'लः कर्मणि च भावे चाकर्मकेभ्यः' ( ३. ४. ६९ ) इति वचनाल्लभ्यते । तथा हि 'भावकर्मणोः' ( १. ३. १३ ) 'शेषात् कर्तरि परस्मैपदम्' इति भावकर्मकर्तृष्वात्मनेपदपरस्मैपदविधानाल्लिङ्गाच्चकारस्यैतेऽर्था अनुमीयन्ते । तत्र 'लः कर्माणि चे' ति वचनं वाक्यभेदेन लकारः कर्मणि भवति, अकर्मकेभ्यस्तु भाव इत्येवमुत्सर्गापवादरूपेण सकर्मकेभ्यो भाव आत्मनेपदाभावं साधयतीति वार्तिककारस्य सिद्धान्तः । य आह––लग्रहणं सकर्मकनिवृत्त्यर्थमि'ति । तत्र कैयटमिश्रैर्व्याख्यातम्––'लग्रहणमि'ति । यदीदं नारभ्येत, ( तदा )[1] यथा भावे विधीयमाना घञादयः सकर्मकेभ्यो भवन्ति ओदनस्य पाकः, सूत्रस्य कृतिरिति, भावकर्मणोरित्यनेन भाव आत्मनेपदं सकर्मकेभ्योऽपि स्यात् । ततश्च पच्यते यत्राग्नू देवदत्तेनेत्यपि स्यादि'ति ।[2] भाष्यकारोऽपि प्रत्याख्यानवादिमुखेन भावकर्मणोरित्यत्राकर्मकपदन्यासात् सकर्मकेभ्यो भाव आत्मनेपदाभावमुपपाद्य कर्तरीति योगविभागाश्रयेण वाक्यद्वयं प्रतिपाद्य प्रथमेन वाक्येनाननियमं द्वितीयेन तद्विधिं च प्रदर्श्यारम्भवादिमुखेनानविषये विप्रतिषेधात् 'कर्तरि कृद्' ( ३. ४. ६७ ) इत्यस्य प्रवर्तनात् तस्य भावकर्मार्थत्वाभावाद् दुष्टं

---

१. मुद्रितपुस्तके नोपलभ्यते ।

२. 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे प्रदीपः । अस्मिन् सूत्रे पदमञ्जरी अपि द्रष्टव्या ।

प्रत्याख्यानपक्षं निरस्य सूत्रारम्भं समर्थयमानो 'लः कर्मणि च' इत्यनेनैव पूर्वोक्तार्थलाभं मन्यते ॥

**प्रथमैकवचस्तथा ॥ १६ ॥**

इति भावे प्रथमपुरुषैकवचनमेव, न तु मध्यमोत्तमपुरुषौ, नापि द्विवचनबहुवचने। तत्र मध्यमोत्तमौ युष्मदस्मत्सामानाधिकरण्ये विधीयमानौ भावस्य तत्सामानाधिकरण्यासम्भवान्न भवतः। आख्यातवाच्यस्य भावस्याश्रयभेदेऽपि भेदाप्रतिभानाद् द्विवचनबहुवचने अपि न भवतः। पाकौ पाका इत्यादौ तु शब्दैक्यादेकशेषतस्तत्सिद्धिः। तथा चोक्तम्—

"निवृत्तभेदा सर्वैव क्रियाख्यातेऽभिधीयते।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना॥"[1]

इति। भूयते देवदत्तेन, आस्यते भवद्भ्याम्, आस्यते भवद्भिरित्युदाहरणम् ॥ १६ ॥

**सकर्माकर्मकाद् धातोः कर्तरि स्मृतमात्मने।**

इति। यदात्मनेपदं कर्तरि स्मृतं, तत्सकर्मकेभ्योऽकर्मकेभ्यश्च भवतीति योजना। एतेन सूत्रे चकारद्वयस्यार्थो दर्शितः। पचते, यजते, आस्ते, शेते इत्युदाहरणम् ॥

**यत्कर्मणि तु निर्दिष्टं वर्तते तत्सकर्मकात् ॥ १७ ॥**

इति। उक्तार्थम्। पच्यते देवदत्तेन यवागूः, गम्यते ग्राम इत्युदाहरणम् ॥ १७ ॥

---

१. वाक्यपदीयम् २।४४६

नाम्नैव सन्नियोक्तव्यः प्रथमः पुरुषो भवेत् ।

इति । नामापरपर्यायैः सुबन्तैरेव सम्बन्धे प्रथमपुरुषो भवतीत्यर्थः । आर्थः सम्बन्धः । स शब्द ( स्य ) सन्निधानेऽसन्निधाने च भवति । तेन पचति देवदत्तः, भवति, पचतीत्यादिप्रयोगः सर्व उपपन्नो भवति । यद्यपि नामान्तर्भूतत्वं युष्मदस्मदोरप्यस्ति, तथापि 'शेषे प्रथमः' ( १. ४. १०८ ) इति सूत्रे शेषशब्देन यदुच्यते, तदेवेह नामशब्देन विवक्षितम् । यद्वा नामशब्देन लिङ्गयुक्तस्यार्थस्य वाचकः शब्द उच्यते । तथा च निरुक्तकृता यास्काचार्येण नामलक्षणमुक्तं 'सत्त्वप्रधानानि नामानी' ति । सीदन्त्यस्मिन् जातिगुणक्रियादय इति सत्त्वशब्देन जात्याधारभूतं लिङ्गसङ्ख्याकर्मादिकारकशक्तियुक्तमिदं-तदादिव्यपदेशयोग्यं वस्त्वभिधीयते । तद् यस्मिन्नुचारिते प्राधान्येन प्रतीयते विशेष्यत्वात्, जात्यादयस्तु गुणभावेन, तन्नामेति तस्यार्थः ।[1] अलिङ्गे च युष्मदस्मदी, ताभ्यां लिङ्गविशेषासम्प्रत्ययादित्येवकारेण युष्मदस्मदोर्व्यवच्छेदः ॥

---

१. "सत्त्वप्रधानानि नामानि । लिङ्गसङ्ख्ययोरत्र सद्भाव इति सत्त्वम् । तथा लक्षणोपपत्तेः । तद् येषु प्रधानं गुणभूता क्रिया नामान्येव तानि । नमन्त्याख्यातशब्दे गुणभावेन नमयन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि । यथैव ह्याख्याते विद्यमानमपि द्रव्यमविवक्षितमेवमिहापि विद्यमाना क्रियाविवक्षिता द्रव्यपरत्वात् सत्त्वशब्दस्य" —निरुक्तम् १।१

सत्त्वशब्दस्य द्रव्यपरता प्रकाश्यते । उक्तञ्च बृहद्देवतायाम् ( १।४२ )

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते ।
तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥

**त्वं युवां यूयमित्येभिस्त्रिभिरेव तु मध्यमः ॥ १८ ॥**

**अहमावां वयं त्वेभिरुत्तमः**

इति। युष्मदि समानाधिकरणे अस्मदि समानाधिकरणे इत्युच्यते। सामानाधिकरण्यं च समानाभिधेयत्वम्। तच्च कारकत्व एव भवति। ततश्च कर्तरि कर्मणि लिङ्विधाने तेनाभिहितत्वाद् युष्मदस्मदभ्यां तयोः कर्तृकर्मणोः प्रथमयैव भवितव्यमिति त्वमादियोग एव मध्यमोत्तमौ भवतः, न तु त्वमादियोग इत्याशयः। अत्रापि पूर्वपदार्थसम्बन्धाश्रयणात् 'स्थानिन्यपी'ति सूत्रावयवप्रतिपादितार्थलाभः। त्वं पचसि, युवां पचथः, यूयं पचथ, अहं पचामि, आवां पचावः, वयं पचाम इत्युदाहरणम्।

व्यावर्त्यमाह--

**नान्यथा मतः।**

इति।

क्वचित्तु मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ भवत इत्याह–

**अन्यथा तु प्रहासे स्यात्**[1]

इति। प्रहासः परिहासः तस्मिन् गम्यमाने त्वमादियोगे उत्तमो भवति अहमादियोगे मध्यम इत्यर्थः॥

---

१. 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' (१.४.१०६) इति पाणिनिसूत्रम्। प्रहासः परिहासः। तस्मिन् गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेस्तूत्तमः स्यात् स चैकवद् भवति। मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते। सूत्रस्य मनोरममुदाहरणं काव्यप्रकाश उपलभ्यते—

प्रहासविषयेऽपि क्वचिदेव, न सर्वत्रेति प्रदर्शयितुमुदाहरणमाह–

**यथा मन्ये नु भोक्ष्यसे ॥ १९ ॥**

इति। मन्योपपदे धातौ मध्यमो विधीयते, मन्यतेश्चोत्तमः, तस्य चैकवद्भावः। एहि मन्ये ओदनं भोक्ष्यसे।[1] न भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि। न च यास्यसि, यातस्तेन पिता इत्युदाहरणम्।

लङ्लिङ्लुटो लृट् च ततश्च लेट् लोट्
षट् टित्त्वयुक्ताः कथिता लकाराः।
लङ्लिङ्लुङो लृङ् च ङितो लकारा–
श्चत्वार एवं दशधा लकाराः॥
तत्राद्यो वर्तमानेऽर्थे क्वचिद् भूतभविष्यतोः।[2]

---

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर·
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमाम्
एषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ॥

चतुर्थ उल्लासः, उदाहरणम् १०३

१. अहमोदनं भोक्ष्ये इति किं त्वं मन्यसे इत्यर्थः।

२. 'अपरोक्षे च' ( ३. २. ११९ ) इति भूतानद्यतने स्मयोगे, 'ननौ पृष्टप्रतिवचने' ( ३. २. १२० ) इति भूते, 'यावत्पुरानिपातयोर्लट्' ( ३. ३. ४ ) इति भविष्यति काले 'किंवृत्ते लिप्सायाम्' ( ३. ३. ६. ) इत्यादि भविष्यति च लड् भवति।

भूतोऽनद्यतनो योऽर्थः परोक्षः स द्वितीयगः ॥
तृतीयश्चानद्यतने भविष्यत्यर्थ ईरितः ।
भविष्यति तुरीयः स्यात् क्वचिदर्थान्तरेऽपि[1] च ॥
लिङर्थे पञ्चमं विद्याच्छन्दस्येव स ईर्यते ।
विध्यादिष्विष्यते षष्ठः क्वचिदन्यत्र[2] दृश्यते ॥
भूतानद्यतनेऽर्थे स्यात् सप्तमोऽन्यत्र[3] च क्वचित् ।
विध्यादिष्वष्टमोऽन्यत्र क्वचित् सम्भावनादिके[4] ॥
नवमो भूतमात्रे स्यात् तथान्यत्रेष्यते[5] क्वचित् ।

---

१. 'अभिज्ञावचने लृट्' ( ३. २. ११२. ) इति स्मृतिबोधिन्युपपदे भूतानद्यतने लृड् भवति । अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः इत्युदाहरणम् । अत्र लृट् लङोऽपवादः ।

२. 'इच्छार्थेषु लिङ्लोटौ' ( ३. ३. १५७ ) इति इच्छार्थेषूपपदेषु धातोर्लिङ्लोटौ स्तः । इच्छामि भुञ्जीत भुंक्तां वा भवानि' त्युदाहरणम् । 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' ( ३. ४. २. ) इति पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात् । लुनीहि लुनीहीत्येवायं लुनाती'त्युदाहरणम् ।

३. 'प्रश्ने चासन्नकाले' ( ३. २. ११७ ) इत्यासन्नकाले पृच्छ्यमाने भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद् धातोर्लङ्लिटौ स्तः ।

४. 'सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे' ( ३. ३. १५४ ) इति सम्भावनेऽर्थे लिङ् स्यात् ।

५. 'माङि लुङ्' ( ३. ३. १७५ ) इति माङ्युपपदे धातोर्लुङ्प्रत्ययो भवति । मा कार्षीदित्युदाहरणम् ।

क्रियातिपत्तौ दशमो भूते चापि भविष्यति ॥[1]

सार्वधातुकसंज्ञस्तिङ् लिट् आशीर्लिङस्तु यः ।

तमार्धधातुकं विद्याच्छन्दस्युभयथा भवेत् ॥

शबादयः कर्तरि स्युः परतः सार्वधातुके ।

भावे कर्मणि यक् तस्मिन् स्यतासी लृङ्लृटोर्लटि ॥

सिप् स्मृतो बहुलं लेटि लुङि स्युः सिजङादयः ।

एते विकरणाः प्रोक्तास्तत्र शित् सार्वधातुकम् ॥

एवं तिङां दिङ्मात्रं प्रदर्श्य तदनन्तरोक्तं कृतमाह—

**कृतस्त्रिष्वपि वर्तन्ते भावे कर्तरि कर्मणि ।**

इति । कृतस्त्रिषु भावकर्मकर्तृषु वर्तन्ते । अन्येषु करणादिष्वपीत्यपि शब्दस्यार्थः । तत्र सङ्ग्रहार्थत्वादस्य ग्रन्थस्य प्रसिद्धतरान् भावादिषु वर्तमानानेवोत्तरत्रोदाहरिष्यामः । अन्ये तु वृत्त्यादिग्रन्थदर्शनवशादूह्या इति भावः ॥

तत्र प्रथमं भावे प्रत्ययान् दर्शयति—

**अजब्ल्युट्क्तिन्घञो भावे युजकाराङ एव च ॥ २० ॥**

इति । एते प्रत्ययाः कर्तृवर्जिते कारके संज्ञायां भवन्ति । क्वचिदसंज्ञायामपि । तत्र भावे बाहुल्याद् भाव इत्युक्तं मल्लग्रामन्यायेन । तथा हि—प्रासः[2], प्रसेवः[3] । 'अकर्तरि च कारके संज्ञायाम् ( ३. ३. १९ )

१. 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' ( ३. ३. १३९ ) इति लिङ्निमित्ते भविष्यति काले क्रियातिपत्तौ सत्यां लृङ् भवति । 'भूते च' ( ३. ३. १४० ) इति भूते काले लिङ्निमित्ते क्रियातिपत्तौ सत्यां लृङ् भवति ।

२. प्रास्यते इति प्रासः । 'प्रासस्तु कुन्तः' अमरकोशः ( २. ८. ९३ ) ।

३. 'स्यूतः प्रसेवः' अमरः ( २. ९. २६ ) । प्रसीव्यन्ति तं प्रसेवः ।

इति कर्मणि घञ्। प्रास्यति तमिति कुन्त उच्यते। गोदायः कम्बलदायः। सम्प्रदाने घञ्। यस्मै गां ददाति स उच्यते। मधुराहारः तक्षशिलाहारः। अपादाने घञ्। आहरत्यस्मादित्याहारः। मधुराया आहारः मधुराहारः। यस्मादाहृत्य मधुरां प्रति द्रव्याणि नीयन्ते, स देशविशेष उच्यते। विशेषणसमासो वा। संज्ञायामुदाहृतम्। असंज्ञायामपि दृश्यन्ते। को भवता दायः, दत्त इत्यर्थः। को भवता लाभः, लब्ध इत्यर्थः। न हि कस्यचित् संज्ञा। अत्र केन घञ्, अनेनैव। संज्ञाग्रहणं हि प्रत्याख्यातम् 'संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनादि'[1]ति। वृत्तिकारेण तु—चकारस्य भिन्नक्रमत्वात् संज्ञायां च भवति क्वचिदसंज्ञायां चेति व्याख्यातमिति तन्मतेऽप्यसंज्ञायां घञ् भवति। करणाधिकरणयोस्त्वपवादत्वात् 'करणाधिकरणयोश्च' (३. ३. ११७) इति ल्युडेव भवति, न तु घञ्। इध्मप्रव्रश्चनः पलाशशातन इति करणे। गोदोहनी सक्तुधानी इत्यधिकरणे। अच् तावत्, चयः जयः क्षयः। 'एरच्' (३. ३. ५६) इत्यच्। भयं वर्षम्। 'नपुंसके भयादीनामुपसंख्यानम्' (वा० ३. ३. ५६) इत्यच्। नपुंसके क्तादिनिवृत्त्यर्थमेतत्। अप् 'ऋदोरप्' (३. ३. ५७) इत्याद्येकत्रिंशत्सूत्रीविहितो द्रष्टव्यः। करः गरः[2] यवः लवः ग्रहः वरः दरः[3] इत्युदाहरणम्। ल्युट्,

१. संज्ञाग्रहणानर्थक्यमित्यादि वार्तिकं 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति सूत्रे विद्यते।

२. 'गरस्तु कृतकं विषम्' इति वैजयन्ती (४. १. २२)।

३. दरो भयम्। 'अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः॥' इति किरातार्जुनीये (१।३३) दरशब्दस्य प्रयोगो द्रष्टव्यः।

हसनं छात्रस्य शोभनं यजनं जल्पनम्। 'ल्युट् च' ( ३. ३. ११५ ) इति ल्युट्। क्तिन्, 'स्त्रियां क्तिन्' ( ३. ३. ९४ ) इत्यादिसूत्रविहितो द्रष्टव्यः। कृतिः धृतिः प्रस्थितिः सङ्गीतिः वृष्टिः इष्टिः। घञ् 'भावे' ( ३. ३. १८ ) इत्यारभ्य 'कर्मव्यतीहारे णच्[1]—' ( ३. ३. ४३ ) इत्यतः प्राग् विहितो द्रष्टव्यः। त्यागः रागः, एकस्तण्डुलनिचायः द्वौ शूर्पनिष्पावावित्यादीन्युदाहरणानि। अत्र घञुत्सर्गः। पूर्वोक्तास्तस्यापवादाः। युच्, कारणा हारणा आ ( सना ) श्रन्थना। 'ण्यासश्रन्थो युच्' ( ३. ३. १०७ ) इति युच्। अकारः, चिकीर्षा जिहीर्षा। 'अप्रत्ययात्' (३. ३. १०२) इत्यकारः। कुण्डा हुण्डा ईहा। 'गुरोश्च हलः' ( ३. ३. १०३ ) इत्यः। अङ्, जरा त्रपा भिदा छिदा। 'षिद्भिदादिभ्योऽङ्' ( ३. ३. १०४ ) इत्यङ्। चिन्ता पूजा कथा कुम्बा चर्चा। 'चिन्तिपूजिकथिकुम्बिचर्चश्च' ( ३. ३. १०५ ) इत्यङ्। प्रदा उपदा प्रधा उपधा। 'आतश्चोपसर्गे' ( ३. ३. १०६ ) इत्यङ्। अत्राकाराङौ क्तिनोऽपवादौ। युच् त्वक्तिनोरपवादः।

**णजिनुण्क्यबनिण्वुल्शा इञ्ण्वुचौ च सयादयः।**
**तुमुनक्त्र्यथुज्नङो नन्की चकारेण समुच्चिताः[2] ॥ २० ॥**

---

१. 'कर्मव्यतिहारे णच् स्त्रियाम्' इति सूत्रम्।

२. णच्, इनुण्, क्यप्, अनिः, ण्वुल्, शः, इञ्, ण्वुच्, तुमुन्, क्त्रिः, अथुच्, नङ्, नन्, किः—इत्येते प्रत्ययाः। 'कर्मव्यतिहारे णच् स्त्रियाम्' (३. ३. ४३) इति णच्। व्यावक्रोशी, व्यावलेखी, व्यावहासीत्युदाहरणानि। 'अभिविधौ भाव इनुण्' ( ३. ३. ४४ ) इति इनुण् प्रत्ययः। सांकूटिनम्, सांराविणम्, सान्द्राविणं वर्तते इत्युदाहरणम्। 'आक्रोशे नञ्यनिः' ( ३. ३. ११२ ) इत्यनिः

**सकर्माकर्मकाद्धातोः क्तो भवेत् कर्मभावयोः ।**

इति । यथासङ्ख्यमत्र सम्बन्धः । सकर्मकेभ्यः कर्मणि, अकर्मकेभ्यस्तु भाव इति । 'तयोरेव कृत्यक्तखलर्थाः' ( ३. ४. ७० ) इत्यत्र 'भावे चाकर्मकेभ्य' इत्यनुवर्तनात् । हरदत्तेन तु 'वयं तु ब्रूम'[1] इत्यादिना एवकारस्यायमर्थः कृच्छ्रेण साधितः । भुक्त ओदनो देवदत्तेन, आसितं भवता, शयितम् । अत्र 'नपुंसके भावे क्तः' ( ३. ३. ११४ ) इत्येतत्सङ्ग्रहार्थो वाक्यभेदोऽनुषङ्गश्च द्रष्टव्यः । सकर्मकाकर्मकाद्धातोः क्तो भवेदित्येकं वाक्यम् । अत्र भाव इत्यनुषज्यते । हसितं छात्रस्य,

---

प्रत्ययः । 'अकरणिस्ते वृषल भूयादि' त्युदाहरणम् । 'इच्छा' ( ३. ३. १०१ ) इति शः । इच्छेत्युदाहरणम् । 'विभाषाख्यानपरिप्रश्नयोरिञ् च' (३. ३. ११०) इति इञ् । कां त्वं कारिमकार्षीः ? कां कारिकामकार्षीः ? इत्युदाहरणम् । 'पर्यायार्हणोत्पत्तिषु ण्वुच्' ( ३. ३. १११ ) इति ण्वुच् । भवतः शायिका, भवतोऽग्रग्रासिका इत्युदाहरणम् । 'ड्वितः क्त्रिः' ( ३. ३. ८८ ) इति क्त्रिः । पक्त्रिमम्, उप्त्रिमम्, कृत्रिमम् इत्युदाहरणानि । 'ट्वितोऽथुच्' ( ३. ३. ८९ ) इति अथुच् । वेपथुः इत्युदाहरणम् । 'यजयाचयतविच्छप्रच्छरक्षो नङ्' ( ३. ३. ९० ) इति नङ् । यज्ञः, याच्ञा, यत्नः, प्रश्नः, रक्ष्णः इत्युदाहरणानि । 'स्वपो नन्' ( ३. ३ ९१ ) इति नन् । स्वप्नः इत्युदाहरणम् । 'उपसर्गे घोः किः' ( ३. ३. ९२ ) इति किः । प्रदिः, प्रधिः, अन्तर्धिः इत्युदाहरणानि ।

१. "वयं तु ब्रूमः—एवकारः कर्तुरपकर्षणाय न कर्तव्य इत्युक्तम्, तस्यात्रोपयोगः—ययोर्भावकर्मणोर्लकार उक्तस्तयोरेवान्यूनानतिरिक्तयोः कृत्यादयो भवन्तीति ।" इति पदमञ्जरी ( ३. ४. ७० ) । काशिकायां तु 'एवकारः कर्तुरपकर्षणार्थः' इत्युक्तम् । अपकर्षणार्थः निवृत्त्यर्थ इति ।

शोभनं शयितमिति। ततः कर्मभावयोरिति। इह सकर्मकाकर्मकादित्याद्यनुषङ्गः। यद्वा 'नपुंसके भावे क्त' इत्ययमपि क्तः सकर्मकेभ्यो न भवति। 'तयोरेवे' त्यत्र क्तमात्रस्य ग्रहणात्, तत्र च भावे चाकर्मकेभ्य इत्यनुवर्तनात्। अत्र च टीकाकृत् प्रमाणम्। तथा च 'णेरध्ययने वृत्तम्' (७. २. २६) इत्यत्र पूर्वोक्तमर्थमधिकृत्य तेनोक्तम्—"अवश्यं चैतद् बोद्धव्यम्। अन्यथा 'नपुंसके भाव उपसङ्ख्यानमि' त्यस्मिन् 'शेषविज्ञानात् सिद्धमि' ति प्रत्याख्याते सकर्मकाद् भावे क्ते विधीयमाने कर्मणो द्वितीया प्रसज्ज्येत, ग्रामं गतम् ओदनं भुक्तमिती"ति।

**कृत्याश्चैव खलर्थाश्च तयोरेवानुवर्णिताः ॥ २१ ॥**

इति। अत्र सकर्मकाकर्मकाद् धातोरित्यनुवर्तते। पूर्ववद्यथासङ्ख्यं सम्बन्धः। कृत्या इति 'तव्यत्तव्यानीयरः' ( ३. १. ९६ ) इत्यारभ्य 'ण्वुल्तृचौ' ( ३. १. १३३ ) इत्यस्मात् प्राग् ये प्रत्यया उच्यन्ते। पक्तव्य ओदनो भवता, भोक्तव्य ओदनः, आसितव्यं भवता, शयितव्यं करणीयं हरणीयम् इति। चेयं जेयम्। 'अचो यत्' ( ३. १. ९७ ) इति यत्। कार्यं हार्यम्। 'ऋहलोर्ण्यत्' ( ३. १. १२४ ) इति ण्यत्। एवमन्येषामप्युदाहरणानि द्रष्टव्यानि। अत्र 'वा सरूपोऽस्त्रियाम्, ( ३. १. ९४ ) इति वचनादुत्सर्गापवादयोः समावेशो भवति। तेन जेतव्यमित्याद्यपि भवति। खलर्थशब्देन खलो युचश्च ग्रहणम्। प्रयोगबहुत्वापेक्षं खलर्था इति बहुवचनं, लक्षणबहुत्वेन वा। ईषत्करः, दुष्करः सुकरः। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' ( ३. ३. १२६ ) इति खल्। ईषदाढ्यंभवं भवता, दुराढ्यंभवं, स्वाढ्यंभवम्। ईषदाढ्यंकरो देवदत्तो भवता, दुराढ्यंकरः, स्वाढ्यंकरः। 'कर्तृकर्मणोश्च

भूकृञोः (३. ३. १२७) इति खल्। ईषत्पानः सोमो भवता, दुष्पानः, सुपानः। 'आतो युच्' (३. ३. १२८) इति युच्। सूपसदनोऽग्निः, सूपसदनमन्तरिक्षम्। 'छन्दसि गत्यर्थेभ्यः' (३. ३. १२९) इति युच्। सुवेदनामकृणोर्ब्रह्मणे गाम्। 'अन्येभ्योऽपि दृश्यते' (३. ३. १३०) इति युच्॥ २१॥

**त्रिषु गत्यर्थकादिभ्यः**[1]

इति। त्रिषु प्रकृतेषु भावकर्मकर्तृषु गत्यर्थादिभ्यो धातुभ्यः क्तो भवति। गतो देवदत्तो ग्राममिति कर्तरि। ग्रामो देवदत्तेन गत इति कर्मणि। गतं देवदत्तेनेति भावे। आदिशब्देन श्लिषादीनामुपादानम्। उपश्लिष्टो गुरुं भवान्। अतिशयितो गुरुर्भवता। उपस्थितो गुरुं भवान्। उपस्थितो गुरुर्भवता। उपासितो गुरुं भवान्। अनूषितो गुरुं भवान्। अनूषितो गुरुर्भवता। अनुजातो माणवको माणविकाम्। अनुजाता माणवकेन माणविका। आरूढो वृक्षं भवान्। आरूढो वृक्षो भवता। अनुजीर्णो वृषलीं देवदत्तः। अनुजीर्णा वृषली देवदत्तेन। केवलानां श्लिषादीनामकर्मकत्वादकर्मकग्रहणेन सिद्धत्वात् सकर्मकार्थं सर्वत्रोपसर्गप्रयोगः। तथा च भाष्यम्—'अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति' इति।

**तथा**[2] **चैवादिकर्मणि**[3]**।**

---

१. "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" (३. ४. ७२) इति सूत्रं द्रष्टव्यम्। श्लिषादयः सोपसर्गाः सकर्मका भवन्ति, तदर्थमेषामुपादानम्।

२. 'तयोरेवा' इति पाठान्तरम्।

३. 'आदिकर्मणि क्तः कर्तरि च' (३. ४. ७१) इति सूत्रेण आदिकर्मणि यः क्तः स कर्तरि भवति, चकाराद् भावकर्मणोः।

इति । कर्मशब्दः क्रियावचनः, न साधनवचनः, आदिशब्देन विशेषणात् । बहूनां समवाये आदिव्यपदेशात् । साधनकर्मणस्त्वेकत्वात् विशेषणानुपयोगात् । आद्येषु क्रियाक्षणेषु भूतत्वेन विवक्षितेषु यः क्तः, सोऽपि त्रिषु भवतीत्यर्थः । प्रकृतः कटं देवदत्तः । प्रारब्धवानित्यर्थः । प्रकृतः कटो देवदत्तेन । प्रकृतं देवदत्तेन । ननु च केषुचित् क्रियाक्षणेष्वतीतेष्वप्यभिमतफलप्रयोजकसकलक्रियानिष्पत्त्यभावाद् वर्तमानत्वमेव क्रियायाः, न तु भूतत्वमिति कथं भूताधिकारविहितप्रत्ययोपपत्तिः । उच्यते । कस्मिंश्चिदेवावयवे समूहरूपस्य समाप्तिः शब्देन गम्यते । तथा हि—कश्चित् पाटलिपुत्रं जिगमिषुरेकमहर्गत्वाह 'इदमद्य गतमि'ति । तत्र या लोकप्रसिद्धा गमनक्रिया, तस्याः परिसमाप्तिं बुद्ध्यावधार्य प्रतिपादकः प्रतिपादयति । प्रतिपत्तापि तथैव प्रतिपद्यते । ततश्चावयवभूतत्वे क्रियाभूतत्वोपपत्त्या भूतप्रत्ययोपपत्तिः । उक्तञ्च—

"समूहः स तथाभूतः प्रतिभेदं समूहिषु ।
समाप्यते ततो भेदे कालभेदस्य सम्भवः ॥"[1]

इति । न च प्रारम्भकाले कटत्वाभावात् कथं प्रकृतकटशब्दयोः सामानाधिकरण्यमिति वाच्यम् । तादर्थ्यात् कारणे कार्यशब्दस्य प्रवर्तनात् ।

गत्यर्थसूत्रेऽकर्मकपदश्रवणात् तत्र च भावकर्मकर्तृग्रहणानुवर्तना-

---

१. वाक्यपदीयम्, तृतीयं काण्डम्, क्रियासमुद्देशः कारिका ५ । क्रियारूपः तथाभूतो व्यापाराणां समूहः प्रतिभेदं प्रत्यवयवं समूहिषु अवयवेषु समाप्यते । अत एवावयवे कालभेदप्रयुक्तस्य भूतभविष्यद्व्यवहारस्योत्पत्तिः ।

च्चाकर्मकेभ्योऽपि त्रिषु भवतीति कस्यचिद् भ्रान्तिः स्यात्। तन्निराकरणायाह—

**अकर्मकात् समुत्पन्नो वर्तते कर्तृभावयोः ॥ २२ ॥**

इति। न तु कर्मणि, असम्भवात्। तेनान्यार्थैव कर्मग्रहणानुवृत्तिः। ग्लानो भवान् ग्लानं भवतेत्युदाहरणम् ॥ २२ ॥

कर्तृप्रत्ययानाह—

**इष्णुच्क्तवतुविच्तृन्क्विप्क्मरच्षाकन्ल्युणिन्यचः।**
**उरण्णुकञ्कञ्टक्टकाः सर्व एते च कर्तरि ॥२३॥**

इति। इष्णुच्, अलङ्करिष्णुः, निराकरिष्णुः, प्रजनिष्णुः उत्पचिष्णुः उत्पतिष्णुः उन्मदिष्णुः रोचिष्णुः अपत्रपिष्णुः वर्तिष्णुः वर्धिष्णुः सहिष्णुः, चरिष्णुः। 'अलङ्कृञ्—'[1] (३. २. १३६) इत्यादिनेष्णुच्। दृषदं धारयिष्णुः, वीरुधः पारयिष्णवः। 'णेश्छन्दसि' (३. २. १३७) इतीष्णुच्। भविष्णुः,' भ्राजिष्णुना लोहितचन्दनेन'। 'भुवश्च' (३. २. १३८) इतीष्णुच्। क्तवतुः, भुक्तवान्, पक्ववान्। 'निष्ठा' (३. २. १०२) इति भूते क्तवतुः विच्, 'उपयड्भीरूर्ध्वं वहन्ति तदुपयज उपयट्त्वम्'। 'विजुपे छन्दसि' (३. २. ७३) इति विच्। कीलालपाः, शुभंयाः। 'आतो मनिन्क्वनिब्वनिपश्च' (३. २. ७४) इति विच्। 'रेडसि पर्णं नयेत्'। 'अन्येभ्योऽपि दृश्यन्ते' (३. २. ७५) इति विच्। तृन्, कर्ता कटान्, वदिता जनापवादान्। तच्छीले 'तृन्' (३. २. १३५) इति तृन्। मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्, अन्नमपहर्तारि आह्वरका भवन्ति श्राद्धे सिद्धे, उन्नेतारस्तौल्व-

---

१. 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' इति सूत्रम्।

लायना भवन्ति पुत्रे जाते। अत्र तद्धर्मिणि। कर्ता(पि) कटं, गन्ता खेलमिति तत्साधुकारिणि। क्विप्, उखायाः स्रंसत इत्युखास्रंसत्, पर्णानि ध्वंसत इति पर्णध्वत्। 'क्विप् च' ( ३. २. ७६ ) इति सोपपदेभ्यः सर्वधातुभ्यः सामान्येन विहितः क्विप्। शंस्थाः। 'स्थः क च' ( ३. २. ७७ ) इति क्विप्। एतद् बाधकशम्यज्बाधनार्थम्। ब्रह्महा भ्रूणहा वृत्रहा। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ( ३. २. ८७ ) इति क्विप्। नियमार्थमेतद् वचनम्। तत्र धातुः कालश्च नियम्यत इति भाष्यकृन्मतम्। तदेवादरणीयम्। केचित्तु चातुर्विध्यं नियमस्याहुः।[1] मातृहा पितृहा सप्तमं नरकं प्रविशेत्। 'बहुलं छन्दसि' ( ३. २. ८८ ) इति पूर्वेण नियमादप्राप्तः क्विब् विधीयते। एवमुत्तरसूत्राणां नियमार्थानामुदाहरणान्युन्नेयानि। विभ्राट्, भाः। 'भ्राजभास—[2]' ( ३. २. ११७ ) इत्यादिना क्विप्। भित्, छित्। 'अन्येभ्योऽपि दृश्यते' ( ३. २. १७८ ) इति क्विप्। अनुपपदार्थमेतत्। 'क्विप् चे' त्यत्र हि

---

१. चतुर्विधो नियमः काशिकायां प्रदर्शितः। 'चतुर्विधश्चात्र नियम इष्यते—ब्रह्मादिष्वेव हन्तेर्नान्यस्मिन्नुपपदे हतवानिति; ब्रह्मादिषु हन्तेरेव नान्यस्मात् स्यात्—ब्रह्माधीतवानिति; ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव नान्यः प्रत्ययः; तथा भूतकाल एव नान्यस्मिन्—ब्रह्माणं हन्ति, हनिष्यति वेति।' इति काशिका। 'उभयतो नियमोऽयम्। ब्रह्मादिष्वेव हन्तेर्भूते क्विब् भवति। क्विबेव हन्तेर्भूते ब्रह्मादिष्विति।' इति भाष्ये ब्रह्मादिष्वेव क्विबेवेति द्विविधो नियमः स्वीकृतः। दीपप्रभायां तु धातुः कालश्चेति द्वयं नियम्यत इति भाष्यकृन्मतमित्युक्तम्। तन्न समीचीनम्।

२. 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' इति सूत्रम्।

सुप्युपसर्गेऽपीति च वर्तते । तथा चाह—'क्विब्विधिरनुपपदार्थं' इति । विभूरिति कश्चित्, प्रतिभूः साक्षी । 'भुवः संज्ञान्तरयोः' (३. २. १७९) इति क्विप् । शुचिषत् अन्तरिक्षसत्, अण्डसूः प्रसूः, मित्रद्विट् प्रद्विट् । 'सत्सूद्विष—[1]' ( ३. २. ६१ ) इत्यादिना क्विप् । प्रपञ्चार्थमेतत् । क्मरच्, प्रसृमरः घस्मरः अद्मरः । 'सृघस्यदः क्मरच्' (३. २. १६०) इति क्मरच् । षाकन्, जल्पाकः भिक्षाकः कुट्टाकः लुण्टाकः वराकः वराकी । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' ( ३. २. १५५ ) इति षाकन् प्रत्ययः । ल्युः, नन्दनः रमणः । नन्द्यादिभ्यो[2] च ल्युरिति ल्युः । णिनिः, ग्राही उत्साही । ग्रहादिभ्यो णिनिरिति णिनिः । अच्, ओदनस्य पचः । पचादिभ्योऽजित्यच् । अत्र केचित्—साहचर्यं व्यवस्थाहेतुरिति न्यायाद् नन्द्यादिसूत्रविहितणिन्यचावेवोदाहरन्ति । यथा रामलक्ष्मणावित्युक्ते दाशरथी रामः प्रतीयते, न तु जामदग्न्यः । अन्ये तु व्याप्तिन्यायाश्रयेण 'कुमारशीर्षयोर्णिनिः' ( ३. २. ५१ ) 'सुप्यजातौ णिनिस्ताच्छील्ये' ( ३. २. ७८ ) इत्यादिसूत्रविहितं णिनिं 'हरतेरनुद्यमनेऽच्' (३. २. ९) इत्यादिसूत्र ( वि ? ) शिष्टमचं चोदाहरन्ति । कुमारघाती शीर्षघाती, उष्णभोजी शीतभोजी, उष्ट्रक्रोशी ध्वाङ्क्षरावी, स्थण्डिलशायी अश्राद्धभोजी, कषायपायिणो गान्धाराः, दर्शनीयमानी, अंशहरः रिक्थहरः, कवचहरः क्षत्रियकुमारः, पुष्पाहरः फलाहरः, पूजार्हा ब्राह्मणी, स्तम्बेरमो हस्ती कर्णेजपः सूचकः, शंभवः शंवद इत्याद्युदाहरणानि । उः, चिकीर्षुः

१. 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' इति सूत्रम् ।

२. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ( ३. १. १३४ ) इति सूत्रम् ।

जिहीर्षुः आशंसुः भिक्षुः 'शनाशंसभिक्ष उः' ( ३. २. १६८ ) इत्युः। 'विन्दुरिच्छुः' ( ३. २. १६९ )। मित्रयुः। 'क्याच्छन्दसि' ( ३. २. १७० ) इत्युः। अण्, कुम्भकारः नगरकारः काण्डलावः वेदाध्यायः। 'कर्मण्यण्' ( ३. २. १ ) इत्यण्। क्षेमकारः। 'क्षेमप्रियमद्रेऽण् च' ( ३. २. ४४ ) इत्यण्। उकञ्, अपलाषुकं वृषलसङ्गतं, प्रपातुका गर्भा भवन्ति, कामुका एनं स्त्रियो भवन्ति। 'लषपतपद'[1] ( ३. २. १५४ ) इत्यादिना उकञ्। 'कर्तृकर्मणोः कृति' ( २. ३. ६५ ) इति षष्ठ्याः 'न लोक——'[2] ( २. ३. ६९ ) इति प्रतिषेधः। कञ्, तादृशः यादृशः। 'त्यदादिषु दृशोऽनालोचने कञ् च' ( ३. २. ६० ) इति कञ्। 'आ सर्वनाम्नः' ( ६. ३. ९१ ) इत्याकारः। टक्, वक्त्रगः सामगः सुरापः क्षीरपः। 'गापोष्टक्' ( ३. २. ८ ) इति टक्। एवमुतरसूत्रोदाहरणानि द्रष्टव्यानि। टः, कुरुचरः मद्रचरः। 'चरेष्टः' ( ३. २. १६ ) इति टः। भिक्षाचरः सेनाचरः आदायचरः। 'भिक्षासेनादायेषु च' (३. २. १७) इति टः। [3]पूर्वसूत्रेऽधिकरण इति वर्तते। अनधिकरणार्थोऽयमारम्भः[4]। कः, विक्षिपः विलिखः ज्ञः प्रियः किरः। 'इगुपधज्ञाप्रीकिरः कः' ( ३. १. १३५ ) इति कः। गृहं वेश्म, गृहा दाराः। 'गेहे कः' ( ३. १. १४४ ) इति कः। गोदः कम्बलदः पार्ष्णित्रम् अङ्गुलित्रम्। 'आतोऽनुपसर्गे कः' ( ३. २. ३. ) इति कः। एवमुत्तरत्रोदाहरणान्यूह्यानि।

---

१. 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्' इति सूत्रम्।

२. 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' ( २. ३. ६९ ) इति सूत्रम्।

३. 'चरेष्टः' इति सूत्रे।

४. 'भिक्षासेनादायेषु च' इत्यनधिकरणार्थ आरम्भः।

ण्वुल्तृच्छणाः ष्वुन्थकनौ ण्युड्वुनिन्खश्खचस्तथा ।
डः ख्युन् खिष्णुच् खुकञ् क्विश्च ण्विञ्युड्विट्कब्ण्विनस्तथा ॥
मनिन्क्वनिब्वनिबिनिङ्वनिपोऽतृन्क्वसू पुनः ।
कानच् शानंश्च चानश्च क्स्नुक्नुवुञ्घिनुणश्च युच् ॥
आलुञ्घुरचो रश्च कुरच्च किकिनौ नजिङ् ।
क्वरबारूक्रुक्लुकनौ क्रुकन् डुष्ट्रन्वरज्घञः ॥
इत्रश्चोणादयश्चैव चकारेण समुच्चिताः ।
अनुक्तानां हि सिद्ध्यर्थं चकार इह पठ्यते[1] ॥ २३ ॥

---

१. ण्वुल्, तृच्, शः, णः, ष्वुन्, थकन्, ण्युट्, वुन्, इन्, खश्, खच्, डः, ख्युन्, खिष्णुच्, खुकञ्, क्विन्, ण्विः, ञ्युट्, विट्, कप्, ण्विन्, मनिन्, क्वनिप्, वनिप्, इनिः, ङ्वनिप्, अतृन्, क्वसुः, कानच्, शानन्, चानश्, क्स्नुः, क्नुः, वुञ्, घिनुण्, युच्, आलुच्, रुः, घुरच्, रः, कुरच्, किः, किन्, नजिङ्, क्वरप्, आरुः, क्रुक्, लुकन्, क्रुकन्, डुः, ष्ट्रन्, वरच्, घञ्, इत्रः, उणादयश्चेत्येते प्रत्ययाः। 'पाघ्राध्माधेट्दृशः शः' ( ३. १. १३७ ) इति शः । 'ज्वलितिकसन्तेभ्यो णः' ( ३. १. १४० ) इति णः । 'शिल्पिनि ष्वुन्' ( ३. १. १४५ ) इति ष्वुन् । 'गस्थकन्' ( ३. १. १४६ ) इति थकन् । 'ण्युट् च' ( ३. १. १४७ ) इति ण्युट् । 'प्रसृल्वः समभिहारे वुन्' (३. १. १४९) इति वुन् । 'स्तम्बशकृतोरिन्' ( ३. २. २४ ) इति इन् प्रत्ययः । 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' ( ३. २. ४८ ) इति डः । 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' ( ३. २. ५६ ) इति ख्युन् प्रत्ययः । 'कर्तरि भुवः खिष्णुच्खुकञौ' ( ३. २. ५७ ) इति खिष्णुच् खुकञ् इत्येतौ प्रत्ययौ । 'स्पृशोऽनुदके क्विन्' ( ३. २. ५८ ) इति क्विन् प्रत्ययः । 'भजो ण्विः' ( ३. २. ६२ ) इति ण्विः।

'भावे स्वोत्तरकाला ल्यम्णमुल्क्त्वाः पूर्वकालजाः ।

इति पाठः । तुमुन् क्त्वा पूर्वकालजा इति पाठस्त्वयुक्तः । तथा हि—क्रियार्थायां क्रियायामुपपदे विधीयमानस्य तुमुनः स्वोत्तरकालजत्व-

---

'कव्यपुरीषपुरीष्येषु ञ्युट्' ( ३. २. ६५ ) इति ञ्युट् प्रत्ययः । 'जनसनखनक्रमगमो विट्' ( ३. २. ६७ ) इति विट् प्रत्ययः । 'दुहः कब् घश्च' ( ३. २. ७० ) इति कप् प्रत्ययः । 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (३. २. ७१) इति ण्विन् प्रत्ययः । 'आतो मनिन्क्वनिब्वनिपश्च' ( ३. २. ७४ ) इति मनिन्, क्वनिप्, वनिप् इत्येते प्रत्ययाः । 'कर्मणीनिर्विक्रियः' ( ३. २. ९३ ) इति इनिः प्रत्ययः । 'सुयजोर्ङ्वनिप्' ( ३. २. १०३ ) इति ङ्वनिप् प्रत्ययः । 'जीर्यतेरतृन्' ( ३. २. १०४ ) इति अतृन् प्रत्ययः । 'लिटः कानज्वा' ( ३. २. १०६ ) इति लिटः कानजादेशः, 'क्वसुश्च' (३. २. १०७) इति क्वसुश्च । 'पूङ्यजोः शानन्' ( ३. २. १२८ ) इति शानन् प्रत्ययः । 'ताच्छील्यवयोवचनशक्तिषु चानश्' ( ३. २. १२९ ) इति चानश् प्रत्ययः । 'ग्लाजिस्थश्च क्स्नुः' ( ३. २. १३९ ) इति क्स्नुः प्रत्ययः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' ( ३. २. १४० ) इति क्नुः प्रत्ययः । 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्' ( ३. २. १४६ ) इति वुञ् प्रत्ययः । 'शमित्यष्टाभ्यो घिनुण्' (३. २. १४१) इति घिनुण् प्रत्ययः । 'चलनशब्दार्थादकर्मकाद्युच्' ( ३. २. १४८ ) इति युच् प्रत्ययः । 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' ( ३. २. १५८ ) इति आलुच् प्रत्ययः । 'दाधेट्सिशदसदो रुः' ( ३. २. १५९ ) इति रुः प्रत्ययः । 'भञ्जभासमिदो घुरच्' ( ३. २. १६१ ) इति घुरच् प्रत्ययः । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' ( ३. २. १६७ ) इति रः प्रत्ययः । 'विदिभिदिच्छिदेः कुरच्' ( ३ २. १६२ ) इति

पूर्वकालजत्वे न सम्भवतः, प्रत्युत उत्तरकालजत्वमेव। शकधृषादिसूत्र-विहितस्याप्युभयासम्भवः। एवं 'समानकर्तृकेषु तुमुन्' (३. ३. १५८) इति। नापि 'कालसमय'[1]–( ३. ३. १६७ ) इत्यादिविहितस्यात्र ग्रहणार्हता। अत्रोत्तरकालशब्देन तत्रभवो धात्वर्थो लक्ष्यते पूर्वकाल-शब्देन। पूर्वकालक्रियावचनधातुलक्षणा प्रकृतिः। एवं ह्युच्यमाने सूत्रार्थविमर्शनवशादेककर्तृत्वं लक्षणाङ्गत्वेनानुक्तसिद्धमिति भावः। तेनैतदुक्तं भवति—द्वयोर्बहूनां वा धात्वर्थानां यदैकः कर्ता भवति शक्तिभेदेऽपि शक्तिशक्तिमतोर्भेदाविवक्षया कर्तृशक्तिमद्देवदत्तादेरेक-त्वाश्रयेण,[2] तदा विशेष्यभूताख्यातवाच्यप्रधानक्रियापेक्षयान्ये भूताः परस्परान्वयानर्हाः पूर्वकालवृत्तय इति तेभ्यः सर्वेभ्यः क्त्वादयः

---

कुरच् प्रत्ययः। 'आदृगमहनजनः किकिनौ लिट् च' ( ३. २. १७१ ) इति किकिनौ प्रत्ययौ। 'स्वपितृषोर्नजिङ्' ( ३. २. १७२ ) इति नजिङ् प्रत्ययः। 'इण्नश्जिसर्तिभ्यः क्वरप्' (३. २. १६३) इति क्वरप् प्रत्ययः। 'शृवन्द्योरारुः' ( ३. २. १७३ ) इति आरुः प्रत्ययः। 'भियःक्रुक्लुकनौ' ( ३. २. १७४) इति क्रुक्लुकनौ प्रत्ययौ। 'क्रुकन्नपि वक्तव्यः' ( वा० ) इति क्रुकन् प्रत्ययः। 'विप्र-संभ्यो ड्वसंज्ञायाम्' ( ३. २. १८० ) इति डुः प्रत्ययः। 'धः कर्मणि ष्ट्रन्' ( ३. २. १८१ ) इति ष्ट्रन् प्रत्ययः। 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपत-दशनहः करणे' ( ३. २. १८२ ) इति ष्ट्रन् प्रत्ययः। 'स्थेशभासपिसकसो वरच्' ( ३. २. १७५ ) इति वरच् प्रत्ययः। 'अर्तिलूधूसूखनसहचर इत्रः' ( ३. २. १८४ ) इति इत्रः प्रत्ययः।

१. 'कालसमयवेलासु तुमुन्' इति सूत्रम्।

२. या शक्तिर्यश्च शक्त्याधारस्तयोरत्र भेदो न विवक्षितः। एक एव देवदत्तः शक्त्याधारः कर्ता स चोभयोरपि क्रिययोरेक एवातः समानकर्तृकता युक्ता।

प्रत्यया ( न ? ) भवन्ति भाव । न च 'कर्तरि कृत्' ( ३. ४. ६७ ) इति वचनात् कर्तरि भाव्यमिति वाच्यम् । तुमर्थाधिकारात् । तुमुनपि कथं कर्तरि न भवतीति चेत् । उच्यते । 'तुमर्थे सेसेनसेऽसेन्'[1]–– ( ३. ४. ९ ) इत्यत्र तुमर्थग्रहणं सयादिप्रापणार्थत्वेऽनर्थकं, सामान्यविधिनैव सिद्धत्वात् । अतस्तुमर्थे ग्रहणसामर्थ्यात् तुमुन् कर्तरि न भवतीत्यनुमीयते । न चान्योऽर्थो निर्दिश्यते । अतः 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तो'ति न्यायात् स्वार्थे धातुलक्षणप्रकृत्यर्थे भावे तुमुन्विधिः । तेन तदर्थवृत्तयः प्रत्यया भावे भवन्ति । अत एव प्रकृत्यर्थस्य साध्यरूपत्वात् तत्रैवैषां विधानाल्लिङ्गसङ्ख्यासम्बन्धायोगः । घञादयस्तु प्रकृत्यर्थव्यतिरिक्ते भावशब्दवाच्येऽर्थे विधानात् तद्भाजः । णमुल् तु प्रकृत्यर्थस्याभीक्ष्ण्यविशिष्टत्वमभिकाङ्क्षति । ल्यब्ग्रहणं विस्पष्टार्थं, क्त्वाग्रहणेनैव सिद्धत्वात् । ल्यप्, प्रकृत्य कटं गतः, प्रहृत्य । 'समानकर्तृकयोः पूर्वकाले' ( ३. ४. २१ ) इति क्त्वा । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' ( ७. १. ३७ ) इति ल्यप् । 'ह्रस्वस्य पिति कृति तुक्' ( ६. १. ७१ ) इति तुक् । णमुल्, पायं पायं व्रजति, भोजं भोजं व्रजति । पुनः पुनः पीत्वा व्रजतीत्यर्थः । 'आभीक्ष्ण्ये णमुल् च' ( ३. ४. २२ ) इति णमुल् । 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युक् । क्त्वा, स्नात्वा भुङ्क्ते, स्नात्वा भुक्त्वा पीत्वा व्रजतीति । व्यादाय स्वपितीत्यादौ तु स्वप्नादिक्रियाक्षणानां व्यादानादेः पूर्वापरकालभावित्वात् समूहिषु च प्रत्येकं समूहस्य समाप्तत्वादपरकाल-

---

१. 'तुमर्थे सेसेनसेऽसेनक्सेकसेनध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः' इति सूत्रम् ।

भाविस्वापाद्यपेक्षया व्यादानादेः पूर्वकालत्वस्यापि भावात् क्त्वादिसिद्धिः। न च विपरीतप्रयोग आशङ्कनीयः। व्यादानोत्तरकालस्वप्नक्रियाप्रतिपादनाय शब्दप्रयोगात्। यदा तु स्वप्नोत्तरकालं व्यादानं प्रतिपाद्यं, तदा सुप्त्वा व्याददातीति भवत्येव। प्राभाकरैस्तु—पूर्वं प्रयुज्यमानाद्धातोरिति व्याख्यातम्। अनुष्ठानविषयं पौर्वकाल्यं नादृतम्।[1] तेषां व्याकरणाधिकरणे वार्तिककारमुखानां सर्वेषां प्रामाण्यमभिधायान्यत्रार्थान्तरवर्णनेन तदभिप्रेतार्थान्यथाकरणात् तेषामेवाप्रामाण्यमङ्गीकुर्वतां वचनं पूर्वमपरेण व्याहन्यत इत्युपेक्ष्यं तत्। उक्तं ह्यस्मदाचार्यैः—'व्यादाय स्वपिति संमील्य हसतीत्युपसंङ्ख्यानमपूर्वकालत्वादि'त्यादि।

**कर्मणि प्रथमा तेषां**

इति। तेषां ल्यबाद्यन्ताभिधेयानां कर्मणि कारके प्रथमा भवति। कदा, यदानुप्रयोगलकारेण कर्मणोऽभिधानम्। पक्त्वौदनो भुज्यते देवदत्तेनेति।

**द्वितीया तु विशिष्यते ॥ २४ ॥**

इति। न केवलं प्रथमैव, किन्तु द्वितीयापि लकारेणानभिहिते कर्मणि शास्त्रेणानुशिष्यत इत्यर्थः। पक्त्वौदनं भुङ्क्ते देवदत्त इति। एतन्न्याश्रयेण कर्तरि प्रथमातृतीये अनुक्तसिद्धे इत्यभिप्रायः। ननु लकारेण स्वप्रकृतिवाच्यक्रियासाधिन्योः कर्तृकर्मशक्त्योरभिधानेऽपि क्त्वाप्रत्ययेन स्वप्रकृत्यर्थकर्तृकर्मणोरनभिधानात् तत्र तृतीयाद्वितीये स्यातां, न तु प्रथमा।

---

१. 'प्राभाकरास्तु पूर्वप्रयुज्यमानादिति व्याचक्षते, अनुष्ठाने पौर्वकाल्यं नाद्रियन्ते; तद्भाष्यवार्तिकविरोधादुपेक्ष्यम्।' इति पदमञ्जरी (३. ४. २१)।

उच्यते—

आख्यातादिपदार्थस्य विशेष्यत्वात् प्रधानता ।
इतरस्याप्रधानत्वं साधिन्यौ च तदर्थयोः ॥
शक्ती गुणप्रधानत्वं तद्द्वारानुभविष्यतः ।
तत्र प्रधानभूतस्य व्रजेच्छक्तिर्यदा भिदाम् ॥
तदा गुणक्रियाशक्तिस्तद्वदेव प्रकाशते ।
प्रधानं ह्यनुरुन्धन्ति गुणास्तन्मुखदृष्टयः ॥ २४ ॥

**वर्तमाने तु निर्देशे वर्तेते शतृशानचौ ।**

इति । निर्देशशब्दः कर्मव्युत्पत्त्याभिधेयवचनः । वर्तमाने प्रारब्धापरिसमाप्तैकफलावच्छिन्नक्रियाक्षणसन्तानलक्षणेऽर्थे वर्तमानाद् धातोः परस्य लटः स्थाने शतृशानचौ वर्तेते भवत इत्यर्थः । पचन् पचमान इति । अनयोर्विधायकं योगं विभज्य प्रथमासमानाधिकरणे विकल्पोऽप्रथमासमानाधिकरणे नित्यत्वं च स्थापितम् ।[1]

**द्रव्यसंज्ञापनात् ताभ्यां समासो न तु सिध्यति ॥ २५ ॥**

इति । द्रव्यस्यौदनादेः संज्ञापनात् सम्प्रत्यायनादर्थाद् ब्राह्मणस्य पचन्नित्यादिभिः, ताभ्यां शतृशानजन्ताभ्यां सह षष्ठीसमासो न सिद्ध्यति, सापेक्षत्वादसामर्थ्यात् ।[2] तेन यत्र सामर्थ्यं चोरस्य द्विषन्नि-

१. 'लटः शतृशानचावप्रथमासमानाधिकरणे' (३. १. १२४) इति अप्रथमान्तेन सामानाधिकरण्ये सति लटः शतृशानचावित्यादेशौ भवतः । पचन्तं देवदत्तं पश्य, पचमानं देवदत्तं पश्य । क्वचित् प्रथमासमानाधिकरणेऽपि भवति ।

१. 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' (२।२।११) इति सूत्रेण पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते ।

त्यादौ, तत् पूरणसूत्रस्थसत्पदप्रयोजनमिति दर्शितं भवति। तथा चोक्तम्—'इदं तर्हि प्रयोजनं चोरस्य द्विषन् वृषलस्य द्विषन्नि'ति ॥२५॥

**ग्रन्थगौरवभीत्याहं श्लोकानां पञ्चविंशतेः ।**

**पदार्थभारं निर्वोढुं प्रभवेयं भवे भवे ॥ २६ ॥**

इति। ग्रन्थगौरवभयात् संक्षिप्तैः पञ्चविंशतिसङ्ख्यायुक्तैरेतैः श्लोकैः पदपदार्थलक्षणभारं निर्वोढुं प्रभवेयं समर्थः स्यामहं भवे भवे जन्मनि जन्मनि। यदा यदा जन्म तदा तदेत्यर्थः। पदपदार्थभारनिर्वहण-सामर्थ्यं नाम पदपदार्थावगममूलवाक्यवाक्यार्थावधारणलब्धश्रुति-स्मृतिविहितनित्यनैमित्तिककाम्यकर्मानुष्ठानजन्यादृष्टपरिपाकासादि-तप्रत्यवायपरिहारस्वर्गादिफलावाप्तिकारकता। यद्वा पदशब्देन पद्यते-ऽनेनार्थ इति वाक्यमुच्यते, अस्मन्मते वाक्यस्यैव वाचकत्वात्। तच्च महावाक्यं, यद्विवर्तोऽयं प्रपञ्चः। तदेवार्थो वस्तु। तद्भारनिर्वहणं नाम व्याकरणसंस्कारपूर्वकयोगशोधितान्तःकरणस्य निवृत्तवर्णपदा-वान्तरवाक्यतदर्थभेदप्रतिभासस्याखण्डसच्चिदानन्दसान्द्रशब्दतत्त्व साक्षात्कारः। तथा च भाष्यकारेणानुषङ्गिकप्रयोजनप्रकरणे भाषितं—'महता देवेन नः सात्म्यं ( यथा ) स्यादित्यध्येयं व्याकरणमि'ति।[२] महता देवेनेति परेण शब्दब्रह्मणेत्यर्थः। सात्म्यं तदाकारता। एतच्च शास्त्रस्यानुषङ्गिकं प्रयोजनं शास्त्रैकदेशसम्बद्धस्य प्रकरणस्याप्युक्तम्।

---

२. 'महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्' इति भाष्यम् १.१.१। साम्यं सायुज्यमित्यर्थः। उक्तञ्च वाक्यपदीये (ब्रह्मकाण्डम्, १३०)—

एवं ब्रह्मप्राप्तिविषयप्रार्थनालक्षणमङ्गलाचरणमुखेन सङ्ग्रहः समापितः ॥ २६ ॥

एवं वररुचिप्रोक्तः सङ्ग्रहश्चर्चितो मया ।
यथामति न कार्त्स्न्येन भासन्ते तादृशां गिरः ॥
वेदो नाम महत्पदं जनपदो यत्र द्विजानां ततिः
साङ्गं वेदमधीत्य वाच्यमखिलं मीमांसतेऽस्य स्फुटम् ।
तत्र ग्राम्यवरे क्वचिन्निवसता नाम्ना च नारायणे—
नैषा वाररुचार्थदीपनपरा दीपप्रभा निर्मिता ॥

दीपप्रभासमेतः वाररुचसङ्ग्रहः

समाप्तः ।



---

"अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥"

इति काशीविद्यापीठस्थसंस्कृतविभागाध्यक्षेण प्रो० डॉ० अमरनाथपाण्डेयेन कृतं टिप्पणं समाप्तम् ।

# निर्दिष्टग्रन्थग्रन्थकारानुक्रमणिका

## उद्धृतकारिकाद्यनुक्रमणिका